व्यासवचने सव्यासविभागनस्तेन द्वयभाव निषेधात् पितृ मातृजीवनवतश्च विभाग निषेधाज्जीवतोरिति साहित्यमविवक्षितम्। अतएव एकस्मिन्नपि जीवति विभागो न धर्म्यः किन्तूभयोपरमे। पित्रोरभाव इत्यादि वृहस्पतिवचनेऽपि निष्टत्तरजस्कायां मातरि जीवन्त्यां विभागस्य मातृधनगोचरत्वानुपपत्तेरुभयाभावोक्त विभागस्यैव जीवतोरपीत्यपि शब्देन निर्दिष्टस्य शास्त्र कीर्त्तनादुभयोरभावे भ्रातृविभागः पितृधनगोचरएवेत्यवधार्यते। अतएव व्यासो मातरि जीवन्त्यां यो विभागस्तस्य मातृप्रधानकत्वं दर्शयति।

यथाह। समानजातिसङ्ख्याये जातास्त्वेकेन सूनवः।

विभिन्न मातृकास्तेषां मातृभागः प्रशस्यते॥

वृहस्पतिरपि। यद्येकजाता वहवः समाना जातिसङ्ख्यया।

सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्मत इति॥

अत्र जातिसङ्ख्या साम्ये सापत्नानामपि भागविशेषः स्वरूपतो नास्तीति मातृभागत्वविधानं मातृप्राधान्यपरमेवेति मायं पुत्राणां विभागः किन्तु तन्मातृणामित्युद्दिश्य विभागः कर्त्तव्य इत्यत्र तात्पर्य्यम्। तेनैतन्मातृधन इवात्रापि मातृजीवने पुत्राणाञ्च परस्परं विभागो धर्म्यः। यतो गौतमाद्युक्ताविभागे धर्मवृद्धिरपि मातृपरमएव वेदितव्येति जीमूतवाहन आह। तत्पितृधने मातृभावापेक्षया अदृष्टार्थत्वापत्तेः प्रागेव निरस्तम्। यच्च पैतृकमित्यैकशेषस्याप्रमाणकत्वात् पौनरुक्त्यापत्तेश्च नास्य मातृधनपरत्वमित्युक्तन्तदप्यदृष्टार्थतापत्ति भयादेकशेषस्य स्वीकर्त्तव्यत्वादयुक्तम्। पौनरुक्त्यमप्ययुक्तम्। पूर्व्वोक्तस्यापि मातृधनविभागस्य विशेषविधानायानु-

यत्तु, असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्त्तिताः।
पितामह्यश्च सर्व्वास्ता मातृतुल्याः प्रकीर्त्तिता इति॥

व्यासवचनात् योगीश्वरवचने पत्नीग्रहणाच्च जीवत्पितृकविभागे पत्नीमात्रस्य पुत्त्रसमांशत्वम्। पुत्त्रपत्नीपदयोः पितृप्रतियोगिकसम्बन्धार्थकतया गौणमुख्यार्थकत्वानापत्तेः। पित्रोरूर्द्धं विभागे तु पुत्त्रकर्तृकतया तत्सम्बन्धमातृप्रतीते वैरूप्यादुभयपरत्वासम्भवात् पुत्रवतीनामेव स्वपुत्त्रसमांशित्वं अपुत्त्राणान्तु ग्रासाच्छादनमात्रभाक्त्वमविभक्तसंसृष्टपत्नीनामिव। युक्तञ्चै तज्जीवद्विभागे पितुः स्वातन्त्र्यात्। अजीवद्विभागे पुत्त्राणां स्वातन्त्र्यात्। मातृपदं पत्नीपदं स्वरसाच्च। युक्तञ्चापुत्त्राणां ग्रासाच्छादनमात्रभाजनत्वमिति बहुतरनिबन्धस्वरसः। मिताक्षराकृतस्तु जीवद्विभागे पुत्त्रसमांशित्वं पत्नीनामुक्तमिदानीं पितुरूर्द्धं विभजतामपि पुत्त्रसमभागित्वं पत्नीनामाहेत्यवतारणिकं पितुरूर्द्धं विभजतामित्यस्य योगीश्वरवचसः प्रयच्छतोऽत्रापि सपुत्त्रापुत्त्रसकलपितृपत्नीनां पुत्त्रसमांशित्वमभिप्रेतमिति प्रतीयते। मदनरत्नकृताप्यत एवोक्तम्। जननीग्रहणमपुत्त्राणामपि मातृसपत्नीनामुपलक्षणं पितामहीनाञ्च। असुताश्च पितुः पत्न्य इत्यादिव्यासवचनादिति। युक्तञ्चैतत्पितुः पत्न्यइति पुत्त्रप्रतियोगिक पितृग्रहणस्यान्यथा वैयर्थ्यात्। पुत्त्रसमांशित्वस्य पितृकृतविभागविषये पत्न्यः कार्य्याः समांशिका इति वदन्नपि मातर इत्येव वदेत्। तस्मात्पितृपत्नीत्वप्रयुक्तमेव जीवद्विभागसाधारणं पुत्त्रसमांशभाक्त्वमिति मिताक्षरामदनरत्नकारकृतोरभिप्रायः। पितुरिति कर्त्तरि षष्ठी। तेन पितृकर्त्तृके विभागे पत्न्यः समानांशा इत्यु-

न्तोऽर्थोऽत्यन्तप्रतियोगिकस्यैव पत्नीत्वस्य साक्षाज्जीवद्विभाग विषय तेनाश्रोचिता । तत्र मातृपदे मुख्यामुख्य मातृपरत्वानौचित्या त्प्रतिसम्बन्धितया च पुत्र एणामेव स्ववचनोपात्तानामुपस्थि तेर्जननी परत्वमेव मातृपदस्य मुख्यार्थं साक्षायोचितम् । शि ष्टाचारोऽप्येवम् । यदत्र युक्तमयुक्तमप्युमिसत्यत्तमधिकेन ।

वृहस्पतिः । तदभावे तु जननी तनया वा समांशिनी ।

अत्र प्रकरणान्तवशादेन पिता स्मर्यते । पितरि प्रेते यदि केऽपि भ्रातरोऽसंस्कृताः सन्ति तदा तत्संस्कारं समुदायद्र व्येण विधायावशिष्टं यथांशेन विभजनीयमित्याह याज्ञवल्क्यः।

असंस्कृतास्तु संस्कार्या भ्रातृभिः पूर्वसंस्कृतैः ।

भ्रातृभिरित्यभिधानाद् संस्कृता भ्रातर इति प्रतीयते ॥

संस्कार्यत्वमात्रविधानस्य दायभाग प्रस्तावात्सम्भ्यात्समु- दाय द्रव्यादिति विवक्षितम् । तथाच व्यासः

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात् ।

संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥

अविद्यमाने पितृधनेऽसंस्कृतः संस्कारावश्यकतामाह ना- रद.।

अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ।

अवश्यकार्याः संस्कारा भ्रातृभिः पूर्वसंस्कृतैः॥

असंस्कृत भगिनी संस्कारोऽप्यावश्यकः। सति पितृद्रव्ये ताभ्योंऽश दानमपीत्याह याज्ञवल्क्यः ।

भगिन्यश्च निजादंशाद्दत्वांशन्तु तुरीयकम् ।

असंस्कृताः संस्कार्या इत्यनुषङ्गः ।

मनुः । स्वेभ्योंऽशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक् ।

स्वात्स्वादंशाच्चतुर्भागं पतिताः स्युरदित्सवः ॥

अत्रोभयत्र प्रत्येक परिकल्पितान्निजादंशादुद्धृत्य सर्वैर्भ्रातृभिर्भगिनीभ्यः प्रत्येकं चतुर्थोऽशो देय इत्यर्थो न भवति। तथा सति बहुभ्रातृकाया बहुधनत्वं बहुभगिनीकस्य भ्रातुर्निर्द्धनतापत्तेः। तस्मात्संस्कारोपयुक्तद्रव्य दानमात्रं विवक्षितमिति रत्नाकरचिन्तामण्यादौ व्याख्यानम्। अनूढानान्तु कन्यानान्विभ्रानुरूपेण संस्कारं कुर्य्यादिति विष्णुवचनञ्च तत्रोपोद्वलकमुपन्यस्तम्। तदयुक्तम्। अंशदानाविवक्षायाः स्मृतिद्वयेऽप्यन्याय्यत्वात्।

संस्काराकरणे प्रत्यवायात्पृथगदान प्रत्यवायश्रवणाच्च अन्यथा पतिताः स्युरदित्सव इत्यदान प्रत्यवाय वचनमप्यसंस्कार प्रत्यवाय परं स्यात्। अतो मेधातिथि मिताक्षराकारादिभि र्व्याख्यातमेवम्। निजादंशात् स्वात्स्वादंशादिति नापादाने पञ्चम्यपि तु ल्यब्लोपे। तथा च तमपेक्ष्येति यावत्। एवञ्च यज्जातीया कन्या तज्जातीय पुत्त्र भाग चतुर्थांशभागिनी सा कार्य्या। तथा चायमर्थो ब्राह्मणजातीया या कन्या वक्ष्यमाणो ब्राह्मणीपुत्त्रभागो यावांस्तच्चतुर्थांशस्तस्याः। एवं क्षत्रियादि जातीय कन्यापि। तच्च यथा। यदि कस्यचिद्ब्राह्मण्येवैका पत्नी तस्याश्चैकः पुत्त्रः कन्यकाचैका। तत्र पित्र्यन्द्रव्यं सर्व्वमेव द्विधा विभज्य तत्रैकस्माद्भागाच्चतुर्थं तत्रैको भागो भगिन्यै तेन देयोऽवशिष्टं स स्वयङ्गृह्णीयात्। एवं पुत्त्र द्वये कन्यैकेच त्रेधा विभागं सर्वं द्रव्यस्य विधायैकस्य चतुर्थांशस्तस्य भागस्य चतुर्थभागम्भगिन्यै दत्त्वा शेषं द्वाभ्यां यथांशम्विभज्य ग्राह्यम्। पुत्रैक्ये कन्याद्वित्वे त्रेधाकृतस्य द्रव्यस्यैकभ्भागचतुर्थी कृत्वा द्वाव-

यौ ताभ्यां कन्याभ्यां दत्त्वाऽवशिष्टमेव ग्राह्यम्। एवं समा जातीयेषु साम्येऽपि सर्वथा भगिनीनां भ्रातृजातचतुर्था तुरीयांशभागिता यथा भवति तथोक्तम्। यदा तु ब्राह्मणी पुत्र एकः क्षत्रियकन्या चैका। तत्र पितृधनं दशधा विभज्य क्षत्रिया पुत्रभागांशांश्चतुरो विभज्य तुरीयमंशं क्षत्रियाकन्यायै दत्त्वा शेषं ब्राह्मणीपुत्रो गृह्णीयात्। यदा तु द्वौ ब्राह्मणीपुत्रौ क्षत्रियाकन्या चैका तदा पितृधनमेकादशधा कृत्वा क्षत्रिया पुत्रभागांशांश्चतुरो विभज्यैकमंशं क्षत्रियकन्यायै दत्त्वा ब्राह्मणीपुत्रावन्यत्सर्वं विभज्य गृह्णीयाताम्। एवं सर्वत्र जातिवैषम्ये भ्रातृभगिनीसंख्यासाम्यवैषम्ये योज्यम्। विष्णुरपि। मातरः पुत्रभागानुसारभागहारिण्योऽनूढाश्च दुहितरः पुत्रभागानुसारेण यथावर्णक्रमेण पुत्राणाञ्चतुस्त्रिद्व्येकभागभागिता तथा तत्तज्जातीयपत्नीनामपि। अनूढाश्च दुहितरः पुत्रभागानुसारभागहारिण्य इत्यनेन यद्यपि चतुराद्यंशानां सर्वेषां दुहितृभ्यो दानं प्रतीयते तथापि स्वेभ्योंऽशेभ्यः स्वात्स्वादंशाद्दिति मनुयोगीश्वराभ्याञ्चतुर्थांशदानस्योक्तत्वात्तथैव पुत्रभागानुसारो न सजातीयभ्रातृसमभागहारित्वमित्यविरोधः। स्पष्टमाह बृहस्पतिः।

समांशा मातरस्तेषाञ्चतुर्थांशाश्च कन्यका इति।

कन्यकानान्त्वदत्तानाञ्चतुर्थो भाग इष्यते।

पुत्राणाञ्च त्रयो भागाः साम्यं त्वल्पधने स्मृतमिति।

वदतः कात्यायनस्याप्येतदेवाभिमतम्। साम्यमित्यादेरयमर्थः। यदि संस्कारपर्याप्तमपि पितृधनं नास्ति तदा पुत्रसमभागितैव दुहितॄणामिति। अनूढानां त्वित्यादि विष्णुवचनमपि

न्नेध, ति याद्दीनाञ्च प्रतिमूलम्। निबन्धानुसारेण संस्कारमनूढा-नाभिप्तुः कन्यानां स्वभगिनीनां कुर्य्यादित्यनेन संस्कारावश्य-कतामात्रमनूद्यते न तु भागदानादाने। स्मृतिचन्द्रिकाकारस्तु। कन्याभ्यश्च पितृद्रव्यस्देयं वैवाहिकञ्च वस्विति देवलवचनानु सारेण संस्कारमात्रोपयोगिद्रव्यदान मेव मन्यते। वैवाहिकं वसुदेयमिति वैवाहिकं विशेषणस्यान्यथा वैयर्थ्यापत्तेरिति तदाशयः। अत्र वदामः। कन्याभ्यः पितृद्रव्यस्देयमिति पृथग्विधिः। तत्तमन्वाद्यनुरोधात्तुर्य्यांशरूपमेव। वैवाहिकञ्च वसु च-देय मित्यपि पृथगेव विधिः विभज्यमाने दायाद्ये कन्याऽलङ्कारं वैवाहिकञ्च स्त्रीधनं लभेतेति शङ्खवचन समानार्थतया व्याख्या-तत्वेदं शङ्खवचनं विद्यारण्य श्रीचरणैः पराशरस्मृति टीका-याम्। पैतृक द्रव्य विभागकाले स्वधृतालङ्कारादिकमपि कन्या प्राप्नोतीत्याह शङ्ख इति। यदि तु वैवाहिकं विवाहोपयोगिपितृ द्रव्यं कन्याभ्योदेयमित्यर्थः स्यात्तदसुपदमनुन्यस्तं स्यादिति पृथग्विधिद्वयमेवात्र युक्तम्। दायतत्वकृता तु कन्याभ्यश्च पितृ द्रव्याद्देयं वैवाहिकं वस्विति पठितन्तत्रापि शङ्खेन समानार्थकता-लाभायास्मदुक्तमेव व्याख्यान मादर्त्तुमर्हं न तु विवाहोपयुक्त द्रव्यपरतेत्यवधेयम्। अत्र च मन्वादिवचनेषु भगिनीपदं क्वचित् [illegible]कन्यादि पदं यद्यपि श्रूयते तथापि भ्रातृ कर्तृक विभागाधिकारात्पितृप्रतियोगिकं कन्यात्वन्दुहितृत्वं भ्रातृप्रतियोगिकञ्च भगिनीत्वमादायैकार्थकतावसेया। तस्मा-दजीवत्पितृकविभागे भगिनीनामपि पितृद्रव्यांशभागित्वञ्च तु संस्कारार्थतामात्रम्। पूर्वन्तु यत्किञ्चित्पिता ददाति तदेव-लभते विशेष वचनभावादिति। जीमूतवाहनेन कृतम्।

प्रदद्युर्भ्रातरः इत्यो शक्यिति मनु योगीश्वराभ्यामभिधान भगिनीभिरधिकार वृत्ता चतुर्थोऽशोग्राह्यः । न ह्यधिकारि एकस्मैव्यात्यो ऽन्योऽन्याना स्वां ग्राह्यादित्युच्यते तथा चतुं ग्रदानमपीति तद्दाने भ्रातॄणामेव दोषो न तु तासामन कारितेति । तदप्ययुक्तम् । उक्तिवैचित्र्य मात्रस्यास्याप्रयं जकत्वात् । इच्छयाविभजेत्सुताम् उद्वारं न्यायसे इत्येत्या वत् । यदपि तेनैवोक्तम् ।

येषान्तु न कृताः पित्रा संस्कार विधयः क्रमात् ।

कर्त्तव्या भ्रातृ भिस्तेषां पैतृकादेव तद्धनादिति । नारदवाक्ये येषामिति पुंलिङ्गनिर्देशात्तदनन्तरमेव चाविद्यमान इति वच नारम्भाश्रुतः संस्कारार्थमेवेदं वचनमिति सति पितृद्रव्ये मन्वा दि वचनेभ्यो भगिनी संस्कारावश्यकत्व प्रतीतेः संस्कारोपयोगि द्रव्यदानमेव विवक्षितमिति तद्धेयम् । वचनान्तरेषु भगिनी संस्कारस्यावश्यकत्व प्रतीतेः ।

पिता पितामहो भ्राता सकुल्यो जननी तथा ।

कन्याप्रदः पूर्वनाशे प्रकृतिस्थः परः परः ॥

अप्रयच्छन् समाप्नोति भ्रूणहत्या मृतावृताविति ।

याज्ञवल्क्यरपि योगीश्वरेण भगिनीविवाह संस्काराकरणे भ्रूणहत्या दोषश्रुते सन्देहमूलकतया येषान्तेषामित्यस्य सा- मान्यलिङ्गनपुंसकमिति वचनात्सामान्य विवक्षान्यायाञ्च नपुं- सक प्रयुक्तत्वं विरूपैकशेषोऽपि वाभ्युपगन्तुमुचित एवेति । यवीयस इति तुम् दीर्घयोरभावच्छान्दसमभिप्रेत्य ॥

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः ।

संस्कार्याः पूर्वजैस्ते वै पैतृकान्मध्यकाद्धनादिति ।

बृहस्पतिवचनं पठित्वा भ्रातृपत्नीनां भगिनीनामप्युपलक्षणमिति मदनरत्नकृता व्याख्यातम् । अत्र च संस्कारश्चाचर्य्यादिरनूढानां दुहितृणाम् । कन्यकानामदत्तानामित्यनूढत्व विशेषणोपादानात्स्वापरिणीता एव चतुर्थांशभागिन्यो भगिन्योऽन्यास्तु यत्किञ्चिदौचित्यात्प्रभक्त इति बोध्यम् । मातृधने चेदमपेक्षणीयम् । स्थावरस्य स्वार्जितस्य पैतामहस्य वा पुत्रानुमत्यैव पिता दानादि कुर्य्यात् । स्थावरं द्विपदञ्चैवेति प्रागुदाहृत वचनात् । यद्यपि स्वयमर्जितमित्यनेन पैतामहे कैमुतिकन्यायेन पुत्रानुमत्यावश्यकता प्रदर्शिता । कुटुम्बव्यापिन्यामापदि तु यः कश्चिदन्यानुमतावपि कुटुम्बभरणस्यावश्यकत्वात् स्थावरदानविक्रयाद्यधिकारी ।

एकोऽपि स्थावरे कुर्य्याद्दानाधमनविक्रयम् ।
आपत्काले कुटुम्बार्थे धर्मार्थे च विशेषतः इति ।

वचनात् धर्मार्थं इत्यनेनावश्यकः पितृश्राद्धादिरूपो धर्मो गृह्यते । यत्तु स्मरणम् । विभक्ता अविभक्ता वा सपिण्डाः स्थावरे समाः ।

एको ह्यनीशः सर्वत्र दानाधमनविक्रय इति ॥

तत्राविभक्तानां मध्यस्थद्रव्ये स्वाम्यसाम्याद्दनीशत्वमन्यानुमतिं विना सिद्धमपि स्थावरे विशेषतस्तदादरार्थमुच्यते । अविभक्तानान्तु व्यवहारसौकर्य्यार्थम् । कालान्तरे हि विभक्ताविभक्तसंशये विभाग भावनावश्यं साक्ष्यादि प्रमाणेन तथा सति कार्य्या स्यादन्यथा साधारणद्रव्य दानाद्यसम्भवात् । अनुमतौ तु सत्यां तदनपेक्षएव व्यवहारः सिध्यति । ननु यथा श्रुतं स्थावरे विभक्तानामपि समं स्वाम्यम् । विभागस्यादृष्टार्थता प्रस-

स्यात्। अतस्तदनुमतिमन्तरेणापि दानादि स्वत्वं सिद्धमेव। विभागभावनायां व्यवहारोऽपि।

यथा, स्वग्राम ज्ञातिसामन्तदायादानुमतेन वा।
हिरण्योदकदानेन षड्भिर्गच्छति मेदिनीति।

वचने ग्रामानुमतिः सामन्तानुमतिश्च। सामन्तानुमतिस्तु सीमाविप्रतिपत्तिनिरासायापि। ज्ञातिदायादानुमतेस्तु पूर्ववदेव व्यवस्था।

अत एव स्मृत्यन्तरम्।

प्रतिग्रहः प्रकाशः स्यात् स्थावरस्य विशेषत इति॥

अन्यथावापि ग्रामसामन्तानुमतिमन्तरेण दानाद्यसिद्धिः प्रसज्येत हिरण्योदकदानेनेति स्थावरे विक्रयो नास्ति कुर्य्या-दाधिमनुज्ञयेति स्थावरस्य विक्रयप्रतिषेधात्तु।

भूमिं यः प्रतिगृह्णाति भूमिं यश्च प्रयच्छति।
तावुभौ पुण्यकर्माणौ नियतं स्वर्गगामिनाविति।

दानप्रशंसनाच्च कुटुम्बभरणाद्यर्थमवश्यकर्त्तव्येऽपि विक्रये सहिरण्यमुदकं क्रेत्रे दत्त्वा दानांशोऽपि कश्चिद्यथा तत्र भवति तथा दानरूपेण स्थावरविक्रयं कुर्य्यादिति सूचितम्। जीमूतवाहनस्तु॥

स्थावरस्य समस्तस्य गोत्रसाधारणस्य च।
नैकः कुर्य्यात्क्रयन्दानं परस्परमतं विना॥

विभक्ता वाऽविभक्ता वेत्यादि व्यासीय वचनद्वयमुपन्यस्य नेदमेकस्य क्रयदानाद्यनधिकारप्रतिपादनार्थम्। यथेष्ट वि-नियोगार्हत्व लक्षणस्य स्वत्वस्य द्रव्यान्तरवत् स्थावरेऽप्यविशे-षात् स्वत्वत्यागाद्यनिष्पत्तेर्वचनशतेनापि वस्तुनोऽन्यथाकरणा-

ग्रहो बोधयितु ममत्वाभावात्। किन्तु दुर्बलपुरुषस्याति कुटुम्बा-र्य्यादि निमित्ताभावे कुटुम्बविरोधादधर्मभागिता ज्ञापनार्थं निषेधरूपम्। अतएव नारदः।

यद्येकजाता बहवः पृथग्धर्माः पृथक् क्रियाः।
पृथक्कर्म गुणोपेता नचेत्कार्य्येषु संस्तुताः॥
स्वभागान् यदि दद्युस्ते विक्रीणीयुरथापि वा।
कुर्य्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वैति।

सामान्यत एव विक्रयाद्यनुमन्यते। ईशास्ते स्वधनस्य वैति हेत्वभिधानात् स्थावरगोचरमपीदं वचनम्। अपरथा तदानर्थक्यापत्तेरित्याहुः। तत्सत्यमेव परं त्वधर्मभागिता ज्ञापनार्थमित्युक्तम्। तथा स्थावरविक्रयस्य बहून् प्रत्यपि निषेधादेक ग्रहणापार्थक्यापत्तेः। व्यवहारशास्त्रस्य व्यवहारसौकर्य्यादि दृष्ट प्रयोजनसम्भवेऽदृष्ट कल्पनानुपपत्तेः। अन्यथाऽनुमतावपि तदापत्तेः। कुटुम्बविरोधजन्य वचनान्तर प्रतिपादिता धर्म-प्रयोजकतापरमस्तु। अत्र च पुत्रेच्छया यो जीवद्विभागो यश्चाजीवद्विभागः स एकेच्छयापि भवत्यविशेषात्। अतएव विभागं प्रक्रम्य यत्कात्यायनेनोक्तम्।

अप्राप्तव्यवहाराणां धनं व्ययविवर्जितम्।
न्यसेयुर्बन्धु मित्रेषु प्रोषितानां तथैव चेति॥

तदपि सङ्गतम्। अन्यथा तदनुमतिमन्तरेण विभागाभावे तद्धनस्य बन्धु मित्रेषु न्यासविधानमनुपपन्नं स्यात्। तथा विष्णुरपि। तथा रक्ष्यं बालधनमाव्यवहार प्राप्तेरिति। अयञ्च पुत्राणां विभागः पुत्र पौत्रप्रपौत्र पर्य्यन्तः समो-नातोत्पत्तितः प्रत्यासत्ति क्रमेणाधिकारक्रमः। पुत्रादीनाञ्च-

यात्यामेव पार्वणे पितृदानाधिकारात्। अतएव देवल

पिता पितामहश्चैव तथैव प्रपितामहः।
उपासते सुतं जातं शकुन्ता इव पिप्पलम्।
मधु मांसैश्च शाकैश्च पयसा पायसेन च।
एष नो दास्यति श्राद्धं वर्षासु च मघासु चेति॥

तथा च श्लोकाः यज्ञ विज्ञित गौतमानां।

पिता पितामहश्चैव तथैव प्रपितामहः।
आतम्पुत्रं प्रशंसन्ति पिप्पले शकुना इव॥
मधुमांसेन खड्गेन पयसा पायसेन वा।
एष दास्यति नस्तृप्तिं वर्षासु च मघासु चेति॥

एवं तुल्याधिकारात् जन्मना स्वत्वस्यापि तुल्यत्वात्तुल्यभाग भागिता प्रसक्ताप्यनेक पितृकाणान्त्विति वचनेन निरस्यते। जीवत्पितृकयोः पौत्र प्रपौत्रयोः पार्वणानधिकारेण पितृदातृत्वाभावात्पितामह प्रपितामहधनेऽधिकारः। यदा चैकस्य पुत्राः सन्त्येकस्य पुत्र एवास्ति। तदा पुत्रस्यैको भागोऽपरस्यैकः सर्वेषां पौत्राणाम्। स्वपित्रधीन जन्ममूलकत्व तु पितामहधनसम्बन्धस्य यावत्स्वेव धने तस्य स्वामित्वाईत्वन्तावत्येव तेषामपीति जीमूतवाहनोक्तन्त्वनादेयम्। जन्मना पौत्राणामपि पितामहधने स्वत्व व्यवस्थापनात्। तस्मात् पौत्राणां पितामहधने वाचनिकमेव भागवैषम्यं मन्तव्यमपरिमितम्। यत्तु तेनैवोक्तम्। यत्रैकस्य भ्रातुरनेकसंख्याः पुत्रा अन्यस्य च ततोऽल्पसंख्यास्तत्रेदमनेकपितृकाणामिति वचनं पौत्रत्वे न सर्वेषां समभागनिराकरणार्थं जीवति तु पितरि पौत्राणाम्पितामह धनस्वाम्ये सपुत्रापुत्र भ्रातृद्वयविभागे

तत्सुताथामपि विभाग: स्यात् स्वाम्याविशेषादिति तत्प्रागेव निरस्तम्। उक्तोऽति प्रसङ्गोऽप्यनेनैव परास्त:। अतएव पितृभ्रातृपुत्त्र समवाये पितृव्य पितृवन्नस्तदिति भ्रातृपुत्त्राणान्तत्र स्वाम्य:भावाद्विभागएव न स्यादित्यप्यपास्तम्। यच्च जीवत्पितृकयोरित्यादि तदपि मन्दम्। न हि पिण्डदानाधिकारएव दायग्रहणे प्रयोजक: ज्येष्ठे सति कनीयसामनधिकारेऽपि दायग्रहणात्। तद्दर्शितायाश्चाढ़्याप्यनपायात्। गोत्रजादीनां दायहराणामनेकेषां समवाये पिण्डदानाद्युपकारित्वं धनस्वामिनो यत्तदनुपकारि व्यावर्त्तकम्परन्तु तदत्र प्रयोजकम्। जीवद्विभागेऽजीवद्विभागे वा कस्याश्चित्पितृपत्न्यां भ्रातृपत्न्यां वा स्पष्टगर्भायामाप्रसवम्प्रतीक्ष्य विभाग: कार्य्य:।

अथ भ्रातृणान्दायविभागो याश्चानपत्या: स्त्रियस्तासा मापुत्त्रलाभादिति वशिष्ठस्मरणात्। आपुत्त्रलाभादिति वचनात् स्पष्टगर्भासु प्रतीक्षाऽस्पष्टगर्भासु तु नेत्यवगम्यते। अतएव तत्र पश्चादुत्पन्नस्य विभागप्रकारमाह योगीश्वर:।

विभक्तेषु सुतोजात: सवर्णायां विभागभाक्।

पितृच्छया पुत्त्रेच्छया वा जीवतो: पित्रोर्विभक्तेषु पश्चात्सवर्णायां भार्य्यायामुत्पन्नो विभागभाक्। विभज्यत इति विभाग: पित्रोर्भागस्तम्भजत इति विभागभाग्भवति। पित्रोरूर्द्ध्वं स एव तयोरंशं लभत इत्यर्थ:। असत्यां दुहितरि मातृभागमिति विशेष:। सवर्णायामिति विशेषणादसवर्णायां जातस्तु पित्र्यात्स्वमात्स्वांशमेव लभते दुहितृभावे मातृभागं सर्व्वमेव। अनेनैव न्यायेन जीवद्विभागेऽपि विभक्तजोऽसव-

र्भाेत्पन्न: स्वभागादुक्तभागेन। न तत्र पित्र्यभागित्वमस्मा यम्। एतदेवाभिप्रेत्य मनुः।

ऊर्द्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनमिति।

पित्रोरिदं पित्र्यमनं यथोक्त व्यवस्थया हरेत् एवकारे भ्रातृभिः स्वांशादाकृष्य स्वभागसमभागभाक् स न कार्य्यः गौतमोऽपि। विभक्तजः पित्र्यमेवेति। जीवति तु पितरि मातरि तत्सपत्न्याद्याऽविस्पष्टगर्भायां विभक्तैर्विभागानन्तरो त्पन्नोऽयं स्वभागादाकृष्य स्वभाग समभागभाक्स कार्य्यः। तथ च विष्णुः। पितृविभक्ताविभागानन्तरोत्पन्नाय विभागन्दद्यु रिति। तच्च भ्रातृदत्तं तद्विभागं पितैव गृहीत्वा तत्परिपाल येत्। तस्यैव तत्राधिकारात्। अप्राप्तव्यवहाराणामित्यादि प्रागुक्तवचनाच्च। यच्च वचनम्।

अनीशः पूर्वजः पित्रोर्भ्रातुर्भागे विभक्तज इति।

तस्याप्ययमेव विषयः। पूर्वजो विभागात्पूर्व्वमुत्पन्नः मातृ पितृधनविभागः पित्रोर्विभागेऽनीशो न स्वामी। विभक्तजश्च पूर्वविभक्तस्य भ्रातुर्भागेऽनीश इत्यर्थः। विभागोत्तरञ्च यत्पितृर्जितं तदपि विभक्तजस्यैव।

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्।
विभक्तजस्य तत्सर्वमनीशास्तत्र पूर्वजाः॥
यथा धने तथर्णे च दानाधानक्रयेषु च।

परस्परमनीशास्ते मुक्त्वा शौचोदक क्रियामिति बृहस्पति स्मरणात्। स एव।

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः।
जघन्यजास्तु ये तेषाम्पितृभाग हरास्तु ते॥

अत्र हेतु रनौरसपूर्वजः इत्यादिसहपनोक्त एव। ये तु विभक्ताः पित्रा संसृष्टाः पुत्रास्तैः सह तु तस्य विभागो न सकल पित्र्यधन ग्रहणमित्याह मनुः।

संसृष्टास्तेन वा ये स्युः विभजेत स तैः सह।

तेन पित्रा पितुरूर्ध्वमितृधने भ्रातृभिर्विभज्य गृहीते विभागसमयेऽस्पष्टगर्भायाः पितृपत्न्याः पश्चात् पुत्रे जाते स्वस्वभागादायव्यय विशोधितात्तैः स्वस्वभागसमभागभाक् करणीय इत्याह याज्ञवल्क्यः।

दृश्याद्वा तद्विभागः स्यादायव्यय विशोधितात्।

दृश्याद्भ्रातृभिर्गृहीतात्। आयः प्रतिमासं प्रतिदिनं प्रत्यब्दं यत्तदुपरिवृद्धम्। व्ययः पितृकृतर्णापाकरणं भ्रातृ भगिनीसंस्कारकरणञ्च। तस्य सर्वसाधारणत्वेन कर्त्तव्यत्वात्। न तु भ्रातृ कर्त्तव्यव्ययस्यैतत् सम्बन्धाभावात्। ताभ्यामायव्ययाभ्यां विशोधितात्पितृ धनात्तस्य विभागोत्तरोत्पन्नस्य विभागः पूर्वविभक्तसमः स्यादित्यर्थः। एतदुक्तम्भवति। प्रातिस्विकेषु स्वस्वभागेषु तदुत्पन्नायमपेक्ष्यावश्यकञ्च साधारणं व्ययन्निष्काश्याविशिष्टं स्वस्वभागेभ्यः किञ्चित्किञ्चिदुद्धृत्य विभक्तजः स्वभागसमभाक्कार्य्य इति। वा शब्दस्तु विभक्तेषु सुतोजात इति पूर्वोक्तेन सह व्यवस्थित विकल्पार्थः व्यवस्थाचोक्तैव। वस्त्राद्युपस्तु। दृश्यात् प्रत्यक्षात्तु गुप्तात्पितृधनादित्यर्थं मुक्ता। विभक्त भ्रातृपेक्षया योऽस्पगुणो विभक्तजस्तद्विषयोऽयम्पक्ष इत्याह। तन्निर्बीजत्वात् गुप्तस्यापि विभागानन्तरे ज्ञातस्य समभागेन विभजनीयत्वादस्य तदग्रहणं प्रमा-

णाभावाभिधान कथनेऽप्यस्यैतात्पर्ये विज्ञानेश्वरेणाभ्यधा-
याच वचनतामस्याइुपेक्ष्यम् ।

अनवर्णानां भ्रातृणां विभाग प्रकारमाह योगीश्वरः ।

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः ।
क्षत्रजास्त्रिद्व्येकभागा विड्जास्तु द्व्येकभागिन इति ॥

तिस्रो वर्णानुपूर्व्येण द्वे तथैका यथा क्रमम् ।
ब्राह्मण क्षत्रिय विशाम्भार्य्या स्वा शूद्रजन्मन इति ॥

योगीश्वरेण ब्राह्मणस्यासवर्णास्तिस्रः क्षत्रियस्य द्वे
विश एका भार्य्या इति। सवर्णामादाय तेषां मध्ये ब्राह्मणस्य
चतस्रः क्षत्रियस्य तिस्रो वैश्यस्य द्वे इत्युक्तम् । सवर्णासवर्ण
सर्वभार्य्याभिप्रायेण त्वादि संख्याने वैश्यस्यापि द्वे शूद्रापरि-
हारे च स्वैवेति स्वा शूद्रजन्मन इति वैश्याहैत्यत्वाभ्यामनुक्ते
रेव सवर्णाभिप्रायेणैवेयं संख्येति विज्ञानयोगिभिर्व्याख्यातम् ।
तथा च ब्राह्मणादूब्राह्मण्यादिषु स्त्रीषु जाताः पुत्रा यथाक्रमं
वर्णशो मातृवर्णानुसारेण । संख्यैकवचनाच्छस्वीप्साया
मित्यधिकरण कारके शस् प्रत्ययः वर्णे वर्णे इत्यर्थः। ब्राह्मणा-
दिभ्यः क्षत्रियादिषु जातानां मूर्द्धाभिषिक्तादिजातिसंज्ञत्वेन
तद्वर्णत्वेन ग्रहणासम्भवान्मातृवर्णाय इत्यर्थः। चतुस्त्रिद्व्ये-
कभागाः स्युः। एतदुक्तम्भवति ब्राह्मणेन ब्राह्मण्यामुत्पन्ना एकै-
काश्चतुरश्चतुरोभागान् लभन्ते। तेनैव क्षत्रियायामुत्पन्नास्त्री
स्त्रीन्। तेनैव वैश्यायामुत्पन्ना द्वौ द्वौ। तेनैव शूद्रायामुत्पन्ना
एकमेकमिति। वर्णश इति सर्वशेषत्वेन सम्बध्यते। तथा
च क्षत्रात् क्षत्रियादिषु जाता यथाक्रमस्त्रीन्स्त्रीन् द्वौ द्वावेकै-
कञ्च लभन्ते। विट्वैश्यादिषु जाता यथाक्रमं द्वौ द्वावेकमेकञ्च

लभत इति । शूद्रस्यासवर्णाभार्य्याभावात्तत्पुत्राणां सजातीय पुत्रभागः पूर्वोक्त एव । यद्यपि शूद्रापरिणयने द्विजातेर्भूयानाक्षेपः पुत्रार्थं विवाहस्तु सर्वथा शूद्रायां निषिद्ध एव । तथा च मनुविष्णू ।

हीनजातिं स्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु ससन्तानानि शूद्रताम् ॥
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥

तदपत्यतया शूद्राजात जनितापत्यवत्तया ब्राह्मणस्य तु क्षत्रविडुपेक्षयाप्याधिक्य दोषतामाह तुल्यपरिणये तावेव ।

शूद्रां शयनमारोप्य ब्राह्मणो यात्यधोगतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयत इति ॥

याज्ञवल्क्योऽपि । यदुच्यते द्विजातीनां शूद्राद्दारोपसंग्रहः ।

नैतन्मम मतं यस्मात्तत्रात्मा जायते स्वयमिति ॥

तेन विप्रादि जातशूद्रापुत्राभावात्कथं तस्यांशाभिधानमिति प्रतिभाति । तथापि रतिधर्मार्थविवाहयोरनुज्ञारूपत्वेन परिणीतायां शूद्रायामनुपन्नाज्जातस्य विभागाभिधानमुपपन्नमेव । शूद्राज्जातो निषादो यः पारशवेति जातिकथनमिव । आचारः मिताक्षरायामेव व्यवस्थापितः । अत एव मनुना ।

कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशोऽवरा इति ।

कामत स्त्ववरा इति च वदता सवर्णापरिणयनमेव मुख्यमित्युक्तम् । शङ्खलिखिताभ्यामपि । भार्याः कार्याः सजातीयाः सर्वेषां श्रेयस्यः स्युरिति पूर्वः कल्पस्ततोऽनु कल्प-

स्तिस्रो ब्राह्मणस्यानुपूर्व्येण तिस्रो राजन्यस्य। द्वे वैश्यस्य एका शूद्रस्येति। आनुपूर्व्येणेत्युक्तेरुत्तरोत्तरन्यूनता सूचिता। यत्तु मनुना चातुर्वर्ण्ये पुत्रविभागे प्रकारद्वय मुक्तम्

अंशन्द्वायाद्धरेद्विप्रो द्वा वंशौ क्षत्रियासुतः।
वैश्याजोऽध्यर्द्धमेकांशमंशं शूद्रासुतो हरेत्॥
सर्वं वा रिक्थजातन्तु दशधा परिकल्प्य तत्।
धर्म्यं विभागं कुर्वीत विधिनानेन धर्मवित्॥
चतुरोंऽशान् हरेद्विप्रस्त्रीनंशान् क्षत्रियासुतः।
वैश्यापुत्रो हरेद्द्व्यंशमंशं शूद्रासुतो हरेदिति॥

तत्रोक्तप्रकारो योगीश्वरसंवादी। तद्गुणादिगुणवत् क्षत्रियादिपुत्रविषयतया व्यवस्थापनीयम्। अतएव ब्राह्मणजातोराजन्यापुत्त्र एव यदि जन्मज्येष्ठो गुणवांश्च तदा ब्राह्मणी पुत्रः समांशभाक्। ब्राह्मणेन क्षत्रियेण च वैश्यायाञ्जनितस्याद्वक्षत्रिया पुत्त्र समांश भागित्याह बृहस्पतिः।

विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः।
भवेत् समांशो विप्रेण वैश्याजातस्तथैवच॥

तथा बौधायनः। सवर्णा पुत्त्रानन्तरापुत्रयोरनन्तरापुत्त्रश्चेद्गुणवान् स ज्येष्ठांशं हरेत्। गुणवान् हि शेषाणाम्भर्त्ता भवतीति। एतद्वचनेऽनन्तरोत्पन्नमात्रस्य गुणवत्त्वज्येष्ठता प्रयुक्तोत्कृष्ट पुत्त्र समांशभाक्त्वोक्तेः वैश्यजशूद्रा पुत्रस्याप्येवंविधस्य वैश्यापुत्त्र समांशिता द्रष्टव्या बृहस्पत्यनुक्तापि। ज्येष्ठांशं हरेदित्यस्योत्कृष्ट समांश हरणमेवार्थो बृहस्पति संवादादुत्तमजातीयापेक्षयाधिकांशानौचित्याच्च। यदा तु शूद्रा एवैकः पुत्त्रो ब्राह्मणस्य। तदा स तद्धन तृतीयांशहारी भाग-

द्वयं सपिण्डानां तदभावे सकुल्यानान्तेषामप्यभावे आद्य-कर्त्तुः। यदाह देवलः।

निषाद एकः पुत्रस्तु विप्रस्य स तृतीयभाक्।
द्वौ सपिण्डः सकुल्यो वा स्वधादाताथवा हरेत्।

ब्राह्मणाच्छूद्रायां जातो निषादः स एकश्चासौ पुत्रश्चेदि-त्यर्थः। क्षत्रिय वैश्ययोस्तु शूद्र एवैकः पुत्रः सधनार्द्धं हरोऽ-परमर्द्धमपुत्रधन ग्रहणाधिकारिणस्तत्क्रमेण गृह्णीयुः। तथा च विष्णुः। द्विजातीनां शूद्रस्त्वेकपुत्रोऽर्द्धं हरोऽपुत्र क्थस्य या गतिः साऽर्द्धस्य द्वितीयस्येति। द्विजाति पदेनात्र क्षत्रियवैश्यमात्र ग्रहणम्। देवलेन ब्राह्मणे विशेषाभिधा-नात्। एक पुत्र इति कर्मधारयः इदमपि सद्गुणातिगुणा-वच्छूद्रापुत्रविषयम्। अन्यथ। यद्यपि स्यात्तु सत्पुत्र इत्या-दिना। ब्राह्मण क्षत्रिय विशामित्यादिना च वक्ष्यमाणमनु वचनेन विरोधापत्तिः। यद्यपि सामान्यत इयन्भागकॢप्ति-रुक्ता। तथापि प्रतिग्रह प्राप्त भूमिव्यतिरिक्त विषयात्क्षत्रि-यादि सुतानान्तत्र भाग प्रतिषेधात्। तथा च बृहस्पतिः।

न प्रतिग्रहभूर्देया क्षत्रियादि सुताय वै।
यद्यप्येषां पिता दद्यान्मृते विप्रासुतोहरेत्॥

अत्र प्रतिग्रहोपादानात्क्रयादि प्राप्तायाम्भवत्येव तेषा-मपि भागः स्वजात्यर्ह इति सूचितम्। अतएव भूमिमात्र विषये शूद्रा पुत्रस्य एयद्विषेधो देवलेनोक्तः।

शूद्रायां द्विजातिभि र्जातो न भूमेर्भाग मर्हति।
सजाता वाप्नुयात्सर्वमिति धर्मो व्यवस्थित इति। यत्तु।
ब्राह्मणां क्षत्रियविशां शूद्रापुत्रो न रिक्थभाक्।

यदेवास्य पिता दद्यात् तदेवास्य धनं स्मृतमिति मनु वचन तत्पितृप्रीतिदत्तधन सद्भावविषयमिति दाक्षिणात्याः । नि यापरिणीतशूद्रा पुत्र विषयमिति तु पौरस्त्यास्तन्न्दा यदेवास्येत्यादि वाक्यशेषोपात्तव्यवस्थामपहायानुपात्तस्वगु निर्गुण व्यवस्थायाः कल्पयितुमनर्हत्वात् । अपरिणीतशू पुत्र भागस्य च दासप्रसवेऽभिधास्यमानत्वात्तत्रैव व्यव स्था । मुख्यामुख्य पुत्राणां विभाग व्यवस्थां वक्तुं तत्स्वरू निरूप्यते तत्र याज्ञवल्क्यः ।

औरसो धर्मपत्नीजस्तत्समः पुत्रिकासुतः ।
क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा ॥
गृहे प्रच्छन्न उत्पन्नो गूढजस्तु सुतः स्मृतः ।
कानीनः कन्यकाजातो मातामहसुतो मतः ॥
अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः ।
दद्यान्माता पिता वा यं स पुत्रो दत्तकः स्मृतः ॥
क्रीतश्च ताभ्यां विक्रीतः कृत्रिमः स्यात् स्वयं कृतः ।
दत्तात्मा तु स्वयन्दत्तो गर्भे विन्नः सहोढजः ॥
उत्सृष्टो गृह्यते यस्तु सोऽपविद्धो भवेत् सुतः ।

सवर्णा धर्मविवाहोढा धर्मपत्नी तस्यां जात औरसः पु त्र इति मिताक्षरा । वस्तुतस्तु नैवमेव बोद्धव्यम् । अनुलोमज नाम् मूर्द्धाभिषिक्तादीनामौरसेष्वन्तर्भावादिति स्ववचन विरो धात् । न हि ते सवर्णायामुत्पन्ना ब्राह्मणादिषु येषां येन ध विवाहासहूढोत्पन्नानामनौरसत्व प्रसङ्गे तेषु सत्स्वप्यन्ये प न्दायग्रहण प्रसङ्गाच्च । तस्मादुत्कर्षाभिप्रायं सवर्णापद धर्मपत्नीजत्वमात्रं वाक्योपात्तं क्षेत्रजादि व्यावर्त्तकं व्याख्येयम्

अतएव मनुः। संस्कृतायां स्वभार्यायां स्वयमुत्पादयेत्तु यम्।

औरसन्तं विजानीयात्पुत्रं प्रथमकल्पिकम्॥

वशिष्ठोऽपि। द्वादशैव पुत्राः पुराणदृष्टाः स्वयमुत्पादिताः स्वक्षेत्रे संस्कृतायामौरसः प्रथम इति। विष्णुरपि। अथ द्वादश पुत्रा भवन्ति स्वक्षेत्रे संस्कृतायामुत्पादितः स्वयमौरसः प्रथम इति। अत्र वचनद्वयेऽपि स्वक्षेत्रे संस्कृतायामिति व्याख्यान व्याख्येयभावोऽन्यथा पौनरुक्त्यापत्तेः। देवलः।

संस्कृतायां स्वभार्यायां स्वयमुत्पादितो हि यः।

औरसो नाम पुत्रः स प्रधानः पितृवंशकृत्।

आपस्तम्बः। सवर्णायां शास्त्रविहितायां यथर्त्तु गच्छतः पुत्रास्तेषां धर्माभिसम्बन्धः दायेनाव्यतिक्रमश्चोभयोर्मातापित्रोः। बौधायनः। सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं पुत्रं विद्यात्। अथाप्युदाहरन्ति॥

अङ्गादङ्गात्सम्भवसि हृदयादभिजायसे।

आत्मा वै पुत्रनामासि स जीवेत् शरदः शतम्॥

आधत्त पितरो गर्भकुमारं पुष्करस्रजम्।

यथेह पुरुषः स्यामा तथा त्वमिह जायसे॥

आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात्।

पुन्नाम्नस्त्रायते यस्मात्पुत्रस्तेनासि संज्ञित इति॥

आपस्तम्बीयबौधायनीययोः सवर्णापदमसुत्कर्षाभिप्रायकमेव। अतएवासवर्णासूत्पन्नानामप्यौरसपुत्रप्रस्तावएव विभागप्रकार उक्तः सङ्गच्छते। आपस्तम्बवचने सवर्णामपूर्वामिति रत्नाकरे धृतः पाठोऽपूर्वामनपूर्वां पतिसंसृष्टां सा वाग्दत्तापि वा न भवतीत्यर्थ इति प्रकाशकार इति व्याख्यातञ्च।

पारिजातेऽप्युक्तम् । सवर्णा द्विजस्य द्विजा । शूद्रस्य शूद्रा न तु ब्राह्मणस्य ब्राह्मणी क्षत्रियस्य क्षत्रिया वैश्यस्य वैश्या अन्यथा ब्राह्मणस्यापि परिणेतुं क्षत्रियादि सुतायां ब्राह्मणपुत्रत्वाभावो न स्यादिति । पुत्रिकायाः सुतः पुत्रिकासुतः । तल्लक्षणः ।

यथाह श्लोके वसिष्ठः। अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।

अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति ॥

मनुरपि । अपुत्रोऽनेन विधिना सुतां कुर्वीत पुत्रिकाम् ।

यदपत्यं भवेदस्यां तन्मम स्यात् स्वधाकरम् ॥

अनेन तु विधानेन पुरा चक्रेऽथ पुत्रिकाम् ।

विवृद्ध्यर्थं स्ववंशस्य स्वयं दक्षः प्रजापतिः ॥

ददौ स दशधर्माय कश्यपाय त्रयोदश ।

सोमाय राज्ञे सत्कृत्य प्रीतात्मा सप्तविंशतिम् ॥

अत्र परिभाष्य दत्तायामुत्पन्नः पुत्रिकापुत्रो मातामहस्येत्युक्तम् । अपरिभाषितदत्तायामपि सम्भवतीति भ्रातृमतीमिति निषेधस्य पुत्रिकाकरणशङ्कानिरासार्थम् । अनेन चापरिभाषितापि पुत्रिका भवतीत्याचारमितात्तरायां निरूपितम् । अतएव गौतमोऽपि ।

पितोत्सृजेत्पुत्रिकामनपत्यो मदर्थमपत्यमिति सम्वाद्य ।

अभिसन्धिमात्रात्पुत्रिकेत्येकेषामिति । ब्रह्मपुराणेऽपि ॥

अपुत्रेण तु या कन्या मनसा पुत्रवत्कृता ।

राजाग्नि बान्धवेभ्यश्च समक्षं वाथ कुत्रचित् ॥

प्राग्वर्षं अथवा शुल्कयुक्ता पित्रा प्रदाय वा ।

गते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका ॥

पित्र्याद्रिक्थात्समश्नानं लभेत तादृशी सुतेति ।

मनुः । मातुः प्रथमतः पिण्डं निर्वपेत्पुत्रिकासुतः ।

द्वितीयन्तु पितुस्तस्यास्तृतीयन्तु पितुः पितुरिति ॥

अथवा पुत्रिका चासौ सुतश्च पुत्रिका सुत इति पुत्रिकैव पुत्रस्थानीयेत्यर्थः । तस्याश्चौरसो जातत्वेऽपि कन्यात्वात्पुत्रसमत्वमिति वचनम् । पितृअवयवानामल्पत्वान्मातृअवयवानां बाहुल्याच्चौरससमत्वमिति मिताक्षरा । यथाह वसिष्ठः । द्वितीयः पुत्रः पुत्रिकैवेति । द्व्यामुष्यायणस्तु ।

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः ।

उभयोरप्यसौ रिक्थी पिण्डदाता च धर्मत इति ॥

याज्ञवल्क्योऽपि । स बीजिनो यद्यप्यौरसस्तथाप्यन्यक्षेत्रोत्पन्नत्वादौरसादपकृष्ट एव । अतएवौरसो धर्मपत्नीज इत्यौरसलक्षणं तेनैवाभिहितम् । अस्माभिरपि क्षेत्रजव्याख्यानपर्याये क्षेत्रजपुत्र अथ एव व्याख्यास्यते । मनुरपि ॥

क्रियाभ्युपगमात् क्षेत्रं बीजार्थं यत्प्रदीयते ।

तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिकएव च ॥

यथा लोके क्रियाकर्षणाख्याताद्भ्युपगमात् । एतस्य वा पार्थं बीजं व्रीह्यादिनास्ति क्षेत्रमस्ति अपरस्य क्षेत्रं नास्ति बीजमस्ति । तत्र तौ मदीयं बीजं त्वदीयं क्षेत्रं तत्र तदा वापे न कृषिं कुर्वंस्तत्रोत्पन्नं फलमावयोरस्त्वित्यभ्युपगमं सम्विदं यदि कुरुतस्तथा सति द्वावपि तत् फलभागिनौ दृष्टौ । तथा द्व्यामुष्यायणा ख्यक्षेत्रेऽप्यत्रोत्पन्न मावयोरस्त्विति संविदा यद्येकस्य क्षेत्रेऽपरः स्वबीजमावपति तदुत्पन्नमपत्यमुभयोर्भवतीति तस्य क्षेत्रजस्य द्विपितृकत्वेन द्व्यामुष्यायण संज्ञा । अत याज्ञ-

वल्क्येन नियोगीत्यादिना इत्युक्तोऽपि पितुरस्यैव देवर सपि-
ण्डादिभ्यो वापि भार्यायां घृताभ्यङ्गादिविधितः पुत्रोत्पा-
दनमितरथा प्रत्यवाय उभयोरित्युक्तं भवति । तथा च मनुः

अपुत्राङ्गुर्वनुज्ञातो देवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रो वा घृताभ्यक्त ऋतावियात् ॥
अनेन विधिना जातः क्षेत्रजोऽस्य भवेत्सुतः ।

यदा त्वनभिसन्धाय द्वयोरपत्यं परक्षेत्रे देवरादिना वीज-
मुप्यते तदा क्षेत्रिण एव तदपत्यम् । तदप्याह मनुः ॥

फलं त्वनभिसन्धाय वीजिनां क्षेत्रिणां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थो वीजाद्योनिर्वलीयसीति ॥

फलमपत्यरूपमनभिसन्धाय यत्र परक्षेत्रे यदपत्यमुत्-
पाद्यते तत्क्षेत्रस्वामिन एव भवति । यथा लोके परक्षेत्रे व्री-
ह्यादि वीजं क्षेत्रस्वामिना सह संविदमकृत्वैव यद्यादौ परका-
येऽन्यदीयो न दुरवादि वीजमावपति तत्रोभयत्रापि क्षेत्र-
स्वामिन एव तदुत्पन्नं फलं स्वाम्यं दृश्यत इति प्रत्यक्षमित्य-
स्यार्थः । तत्र हेतुर्वीजाद्योनिर्वलीयसीति । गवाश्वादौ
तथा दर्शनादिति भावः । तया चाभिसन्धौ सत्येव क्षेत्रजस्य
वीजिस्वाम्येन द्व्यामुष्यायणत्वं क्षेत्रस्वामि स्वाम्यन्तु क्षेत्रज उभ-
यत्रापीति फलितोऽर्थः । अतएव यद्यपि याज्ञवल्क्येनापुत्रे-
णेत्यादिवचने वीज्यभिसन्धिर्नोपात्तस्तथापि मन्वाद्येकमूलक-
तयानुसन्धेयः । अतएव । क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण
वा । इत्यनभिसन्धि साधारणं क्षेत्रजलक्षणमुक्तमन्यथा पौन-
रुक्त्यापत्तेः । सगोत्रेण देवरसपिण्डादिना । इतरेण सगो-
त्रेणोक्त्यनुकल्पः मनुना सपिण्डो वा सगोत्रो वा इत्यभिधानात्

नियोगश्च वाग्दत्ता विषय एवेत्याचार्य्याः।

यस्या म्रियेत कन्याया वाचा सत्ये कृते पतिः।

तामनेन विधानेन निजो विन्देत देवर इति ॥

मनुना तत्रैव नियोगविधिना पुत्रोत्पादनस्य नियमित-त्वात्। विधवानियोगस्य प्रत्युत प्रतिषिद्धत्वाच्च। तथाहि ॥

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यङ्नियुक्तया।

प्रजेप्सिताधिगन्तव्या सन्तानस्य परिक्षये ॥

विधवायां नियुक्तस्तु घृताक्तो वाग्यतो निशि।

एकमुत्पादयेत् पुत्रं न द्वितीयं कथञ्चनेति।

इत्यादि विधवानियोगमुपन्यस्य निषेधयति स्वयमेव मनुः।

नान्यस्मिन् विधवा नारी नियोक्तव्या द्विजातिभिः।

अन्यस्मिन् हि नियुञ्जाना धर्मं हन्युः सनातनम् ॥

नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित्।

न विवाहविधावुक्तं विधवावेदनं पुनः ॥

अयं द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः।

मनुष्याणामपि प्रोक्तो वेणौ राज्यं प्रशासति ॥

स महीमखिलां भुञ्जन् राजर्षिप्रवरः पुरा।

वर्णानां सङ्करञ्चक्रे कामोपहतचेतनः ॥

ततः प्रभृति यो मोहात्प्रमीतपतिकां स्त्रियम्।

नियोजयत्यपत्यार्थन्तं विगर्हन्ति साधव इति ॥

अत्र वाग्दत्ताशब्देन तुभ्यमहं सम्प्रदद इत्यादि सङ्कल्प-वाक्येन कन्या दात्रा दत्ता उच्यते। विधवाशब्देन तु सप्तपदी-पर्य्यन्त विवाहोढा पश्चान्मृतपतिका। न तु विवाहात्प्रागनि-यतकाल प्रतिश्रवमात्रेण वाग्दानदत्तायाः।

अव्यङ्गेऽपतितेऽक्लीवे दशदोषविवर्जिते ।
इमां कन्यां प्रदास्यामि देवाग्नि गुरुसन्निधाविति ॥

वाक्येन प्रतिज्ञायते । अत एव पतिरिति मनुनोक्तम् । प्राग्भाविप्रतिश्रवणस्य विवाहप्रयोग वहिर्भावेन प्रतिश्राव्यस्य पतित्वाग्नि गुरुसन्निधाविति वाक्येन प्रतिज्ञायते । यद्यपि सङ्कल्पितायाः अपि न स पतिर्ज्ञातः ।

भार्य्यात्ववत्पतित्वस्याप्यलौकिकसंस्कारात्मकत्वेन विवाहभावनाभाव्यस्य सततं प्रागनुत्पत्तेः । तथापि प्रयोगोपक्रमे तत्फलीभूततद्व्यवहारसम्भवः । यजमानेष्टितः प्रागप्याहवनीय व्यवहारवत् । प्रतिश्रवणमात्रे तु न तदुपक्रमोऽपीति सर्व्वथा पतित्व व्यपदेशोऽनुपपन्नः । अतएव प्रतीच्योदीच्यादीनां विवाहाद्दर्वाक्कालात्‌ वाग्दत्तायास्तदुद्देश्ये मृतेऽपि पुनरविगीत शिष्टैरन्येन सह विवाहः क्रियते । अन्यथा कलौ नियोगविधेरपि निषिद्धतया पुनर्दत्ताविवाहस्य दूरापास्ततया स दूराचारएव स्यात् । तथा चायमर्थः । वाचा सत्ये कृते सङ्कल्पवाक्येन दाने कृते सति यस्याः पतिः पतित्वभाव्यकविवाहभावनाविषयीभूतः पुरुषो म्रियेतेति । न च विहितप्रतिषिद्धत्वाद्विकल्पएव विधवानियोगस्यास्त्विति वाच्यम् । वस्तुनि विकल्पासम्भवात् । नहि विधवायां नियोगात्प्रवृत्तस्य प्रत्यवायो भवति न भवति वेति सम्भवति । नियोगविधेर्य्यस्या म्रियेतेत्यादि वचनेन वाग्दत्ताविषयत्वे नियमिते विधवाविषये प्रवृत्त्यभावाच्च नियोजयितृणाम्निन्दाश्रवणात् स्त्रीधर्मेषु व्यभिचारस्य बहुदोषजनकत्व श्रवणात् संयमस्यातिप्रशंसनाच्च दृष्टवलत्वस्यापि विधि प्रतिषेधयोरभावात् । तथा च मनुरेव ।

कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः ।
न तु नामापि गृह्णीयात् पत्यौ प्रेते परस्य तु ॥

जीवनार्थं पुरुषान्तराश्रयणो निषिद्धः ।

आसीतामरणात् क्षान्ता नियता ब्रह्मचारिणी ।
यो धर्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम् ॥
अनेकानि सहस्राणि कुमारब्रह्मचारिणाम् ।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ।
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता ॥
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः ।
अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते ॥
सेह निन्दामवाप्नोति पतिलोकाच्च हीयत इति ॥

पुत्रार्थमपि पुरुषान्तराश्रयणं निन्दातिशयपुरःसरमतिषिद्धवान् । पश्चात् स्वयमेव यस्या म्रियेतेत्यनेन वाग्दत्ताविषयनियोगस्य च धर्मत्वमुक्तवान् । अनेन विधानेनेत्युक्ताऽन्यथा ।

यथा विध्यधिगम्यैनां शुक्लवस्त्रां शुचिव्रताम् ।
मिथो भजेताप्रसवात्सकृत्सकृदृतावृताविति ॥

विधानमपि दर्शितवान् । एताभ्यञ्च गुर्वनुज्ञादिः पूर्वोक्तः स्मृत्यन्तरोक्तश्च यो विधिः सोऽप्यनेनेति सर्वनाम्ना परामृश्यते । देवरग्रहणं सपिण्डादेरुपलक्षणम् । वचनान्तरानुसारात् । पतिपदं वाचा सत्य इति च व्याख्यातमेव ।

यस्मै वाग्दत्ता सम्प्रतिग्रहमन्तरेणैव तस्याः पतिरित्यस्मादेवावगम्यत इति मिताक्षराग्रन्थोऽप्यस्मदुक्तार्थाभिप्रायकतयैव नेयः । यथा मृते दोषस्योक्तत्वात् । अतएवाग्रे तनो-

ग्रन्थ:। अयञ्च विवादो यद्वृत्ताध्ययनादि नियमवाचिनुस्नागम-नाङ्गमेवेति न द्वैवरस्य तत्याज्यमात्यामापादयति। अतस्तदु-त्पन्नमपत्यं क्षेत्रस्वामिन एवास्यां सक्षिदि। सक्षिदि। स-ज्ञिदेव तूभयोरपीति। नारद:॥

क्षेत्रिकानुमते बीजं यस्य क्षेत्रे प्रसिच्यते।
तदपत्यं द्वयोरेव बीजिक्षेत्रिकयोर्मतम्॥

शङ्खलिखितौ। मन्त्र संस्कारकर्त्तुरपत्यमित्याङ्गिरसो बीजिक्षेत्रिकयोरनुमते यद्बीजमवकीर्य्यते तत् द्विधा स्यात्तु यता:। कात्यायन:। क्षेत्रिकस्य मतेनापि फलमुत्पादयेत्तु य:।

तस्येह भागिनौ तौ तु न फलं स्याद्विनैकत:॥

हारीत:। जीवति क्षेत्रजमाहुरस्नातकाद्यामृते ह्यामुष्या-यणमनुप्रबीजत्वात्। नाबीजं क्षेत्रं फलति। नाक्षेत्रं बीजं रोहत्युभयदर्शनादुभयोरपत्यमित्यपरे। तेषामुत्पादयितु: प्रथम: प्रवरो भवति। द्वौ पिण्डौ निर्वापे दद्युरेकपिण्डे वा द्वावनुकीर्त्तयेत्। द्वितीये पुत्रस्तृतीये पौत्रो लेपिनश्च सौम्या-चक्षाणा आसप्तमादित्येके। जीवति क्षेत्रपतौ तस्यैव क्षेत्रजं पुत्रमाहु:। अत्र हेतुरस्नातकाद्यास्त्रिया इत्यर्थ:। मृते तु क्षेत्रपतौ। अपुत्रायाश्च भर्त्तुरित्यादि वक्ष्यमाण मनुवचनात् स्नातकाद्यप्रविशिष्टं यद्यपि तथापि न क्षेत्रिण एव स्नात हेतुर नुप्रबीजत्वात् क्षेत्रिणो बीजिनश्चाप्यनुमत्यवश्यं भावादित्यर्थ:। तत्रोपपादकता बीजमित्यादि निर्वापे श्राद्धत्वेऽस्मिन्नित निर्वाप: पिण्डपितृयज्ञस्तत्र ह्यामुष्यायणा: पितृद्वयाय द्वौ पिण्डौ पृथग्दद्यु:। एकपिण्डे वा द्वौ पितरावनुकीर्त्तयेत्। एकैक स्मिन् द्वौ द्वाविति वीप्सा बोध्या। यदि द्विपिता स्यादेकैकस्मि

पिण्डे द्वौ द्वावुपलक्षयेदित्यापस्तम्बकरणात्। त्रयाणामपि द्वित्वादिति भाव:। द्वितीय इत्यादि। द्वितीयं तृतीयं चारभ्येत्यर्थ:। लेपिनश्च त्रीणित्यादि। तत्कीर्त्तनेऽपि द्वौ द्वावनुकीर्त्तयेदित्यर्थ:। नारदोऽपि।

आमुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्।
ऋक्थादर्द्धांशमादद्युर्बीजिक्षेत्रिकयो स्तथा॥

अर्द्धांशमिति यथोचितभागोपलक्षणम्। बौधायन:। यथाप्युदाहरन्ति।

द्विपितु: पिण्डदानं स्यात् पिण्डे पिण्डे च नामनी।
त्रयश्च पिण्डा: षण्णां स्युरेवं कुर्वन्न मुह्यतीति॥

षण्णां पितृ पितामह प्रपितामहानाम्। स एव।

मृतस्य प्रसूतो यश्च क्लीवस्य व्याधितस्य वा॥

तेनानुमतस्य क्षेत्रे स क्षेत्रज: स च द्विपिता द्विगोत्रश्च द्वयोरपि स्वधाऋक्थभाग्भवति। मनु:।

यस्तल्पज: प्रमीतस्य क्लीवस्य व्याधितस्य वा।
स्वधर्मेण नियुक्तायां स पुत्र: क्षेत्रज: स्मृत:॥

अत सर्वत्र जीवति क्षेत्रिणि व्याध्यादिप्रतिबद्ध पुत्रोत्पादने यथा योगं गुरूणामभर्त्तुरपि नियोग: सम्भिन्न। मृते तु गुरूणामेव। तथा च क्षेत्रजो द्विविधो द्विपितृक: क्षेत्रिकपितृकश्च।

गृहे प्रच्छन्न उत्पन्नो आरात्पत्वात्सवर्णजातित्वेन निर्णीत: क्षेत्रस्वामिनो गूढजो नाम पुत्र:। मनु:।

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य स:।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पज:॥

नचेत्यादि। पुरुषविशेष अभ्यवेनाऽतोऽपि सवर्णाजारजन्यत्वेन ज्ञातः।

सजातीयेष्वयमप्रोक्तस्तनयेषु मया विधिरिति।

योगीश्वरोक्तेस्तत्र व्याख्यास्यते। कानीनः कन्यकायामपरिणीतायां सवर्णाज्जातः स मातामहसुतो यस्य सा कन्या तस्यैव पुत्र इत्यर्थः।

परिणीतायान्तु जातो वोढुरेव तु गूढजः।

यथाह मनुः। पितृवेश्मनि कन्या तु यम्पुत्रञ्जनयेद्रहः।

तं कानीनं वदेन्नाम्ना वोढुः कन्या समुद्भवमिति॥

एतैर्वाक्यैरपरिणीतायां पितृगृहावस्थितायां सवर्णाजारजः कानीनः स च मातामहसुत इत्युक्तं तद्विरुद्धं ब्रह्मपुराणीयं कल्पतरुलिखितं वाक्यम्।

अदत्तायान्तु यो जातः सवर्णेन पितुर्गृहे।

स कानीनः सुतस्तस्य यस्मै सा दीयते पुनः॥

नारदवाक्यमपि तत्रैव।

कानीनश्च सहोढश्च गूढायां यश्च जायते।

तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृता इति॥

अत्रादत्तायां सवर्णात् पितुर्गृहे जातस्य कानीनत्वमविरुद्धम्। यस्मै सा पुन दीयते तस्यासौ सुत इति विरुद्धं नारदवचनेऽपि गूढोत्पन्न सहोढकानीनस्यापि वोढैव पितेति प्रतिपादितम्। मनुनापि वोढुरित्युक्तं न मातामहस्येति। या तु मिताचराकृता यद्यनूढायासुत्पन्नस्तर्हि मातामहसुतोऽप्यूढायान्तदा वोढुरेवेति व्यवस्था कृता। सापि मनसि न चमत्कारमादधाति। तथा सति हि कन्याशब्दवाच्यायाम-

परिणीतायामजातत्वात् तस्य कानीनत्वमनुपपन्नम्। अथ कन्या-शब्दः अपत्यमात्रपरोऽविशेषणवैयर्थ्यात्। गूढजादीनामपि तत्रोत्पन्नत्वेनाव्यावर्त्तकत्वात्। सर्वोऽपि कस्यचिदपत्यमेव। ब्रह्मपुराणवचनविरोधश्च दुष्परिहरस्तत्रादत्तायामित्युक्तत्वात्। अतएव मानवविरोधोऽपि दुःसमाध एव। कल्पतरुकारेणापि परस्परविरुद्धवचनानि लिखितवता दुरवगुण्ठ्यवस्था-वस्थानभिधानाद्विरोध एव न प्रतिसंहितः। तेनहि मातामह सुतत्वञ्चानीनस्य बोधयन्ति बहूनि वचनान्युपन्यस्य तद्विरुद्धे ब्रह्मपुराणनारदवचने तदनुपदमेव लिखिते। तत्र वशिष्ठस्य वचः। कानीनः पञ्चमः या पितृगृहेऽसंस्कृता कामादुत्पा-दयेत्तु कानीनो मातामहस्य पुत्रो भवतीत्याह। अथाप्युदा-हरन्ति।

अपुत्रा दुहिता यस्य पुत्रं विन्देत तल्पजः।

पौत्रो मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति॥

नारदस्यैवम्। अज्ञात पितृको यस्तु कानीनोमूढमातृकः।

मातामहस्य दद्यात्स पिण्डं रिक्थं हरेत्ततः॥

बौधायनस्यापि। असंस्कृतामननिसृष्टां यामुपगच्छेत्तस्यां यो जातः स कानीन इति। अत्र प्रतिविदधः। मातामह सुतत्वं कानीनस्य प्रतिपादयतां वचनानां सर्वथा या न दत्ता-तस्याः सवर्णाजातविषयत्वम् वोढ़ुः सुतत्वं प्रतिपादयतान्तु सङ्कल्पितायां सप्तपदीपर्य्यन्तं विवाहभावनाभाव्यभार्य्यात्वम-प्राप्तायां यः सवर्णादुत्पन्नस्तद्विषयत्वम्। अदत्तायामिति नारदवचने बौधायनवचने चाननिसृष्टामिति पदाभ्यामसमाप्त विवाहभावनोच्यते न तु सर्वथा दत्ता सुतायैतत्। सङ्क-

त्वेन पितृस्वत्वापगमपरिणेतृस्वत्वोत्पत्त्युपगमात्। पितुः सर्वथा स्वत्वापगमाभावाच्च कानीनत्वव्यपदेशस्य परिणेतृस्वत्वोपगमेऽपि तदीयत्वञ्च सम्भवात्। पूर्णपितृस्वत्वे तु तदुत्पन्नस्य मातामहसुतत्वोपपत्तेः। मनुवचनस्याप्ययमर्थः या सङ्कल्पिताऽसमाप्तविवाहभावना अतएव कन्यापरिणेतृभार्यात्वस्यानिष्पत्तेः। तादृश कन्यासमुद्भवं कानीननामान वोढुर्येन विवाहाने तस्य वदेदिति। अतएव पितृवेश्मनीत्यपि सङ्गत मनुवाद्दतया। विवाहानन्तरमेव भर्त्तृगृहप्रवेशात् मिताक्षरा ग्रन्थस्याप्ययमर्थः। अनूढायां वोढु मनुपक्रान्तायाम्। ऊढायां वोढुरुपक्रान्तायामिति। आहिकमणि कः न तु भूते। समाप्त विवाह भावनायान्तु सवर्णजारजातं गूढजः। अतएव गृहे प्रच्छन्न उत्पन्नो भर्त्तृगृहे तेनाज्ञातं जात इत्युक्तम् पुनर्भूर्द्वि विधा। विवाहमात्रेणाक्षताप्यन्यै परिणीयमानैका। अन्या तु विवाहात्प्रागेव पुरुषसम्भोगदूषिता। तस्याञ्जातः पौनर्भवः। अतएवाक्षतायां क्षतायां व जात इत्युक्तम्।

मनुः। या तु पत्या परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते॥

कात्यायनः। क्लीवं विहाय पतितं या पुनर्लभते पतिम्।
तस्यां पौनर्भवो जातो व्यक्त मुत्पादकस्य सः॥

वशिष्ठविष्णू। पौनर्भवश्चतुर्थ इति। चतुर्थत्वन्तदनुक्रमापेक्षया। माता भर्त्राज्ञया पिता वा यमन्यस्मै दद्यात्स तस्य दत्तकः पुत्रः। तथा च मनुः।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।

सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमः सुतः ॥

आपदीत्युक्तेरनापदि दातुः प्रत्यवायः। मातापितरौ प्रत्येकं मिलितौ वा। अद्भिरिति दान प्रतिग्रह प्रकारोपलक्षणम्। सदृशं सवर्णं प्रीति संयुक्तमिति क्रियाविशेषणम्। एकः पुत्त्रश्च न देयो न प्रतिग्राह्यः। तथा च वशिष्ठः। शुक्रशोणितसम्भवः पुरुषो माता पितृनिमित्तकस्तस्य प्रदान विक्रय परित्यागेषु मातापितरौ प्रभवतः। नत्वेकं पुत्त्रन्दद्यात्प्रतिगृह्णीयाद्वा। स हि सन्तानाय पूर्वेषां न तु स्त्रीपुत्त्रं दद्यात्प्रतिगृह्णीयाद्वा-न्यत्रानुज्ञानाद्भर्त्तुरिति। अत्र भर्त्रनुज्ञां विना स्त्रियाः पुत्त्र-प्रतिग्रह निषेधाद्दत्तानुज्ञे भर्त्तरि मृते विधवया स्वतः पुत्रो-दत्तको न भवतीत्याहुस्तन्न अपुत्रस्य गत्यभावात्पुत्रकरणस्या-वश्यकत्वप्रयुक्ताच्छास्त्रमूलक तदनु ज्ञायास्तत्राप्यक्षतेः। नचैव मनुज्ञानादन्यत्रेति व्यर्थम्। व्यावर्त्याभावाच्छास्त्रीयानुमतेः सर्वत्रावश्यकत्वादिति वाच्यम्। मुमुर्षोः पत्यन्तरे पुत्रवतो वानुज्ञाया असम्भवाद्भार्य्या यदि स्वपुत्रार्थमेव तं प्रतिषेधस्य।

सर्वासां एकपत्नीनामेका चेत्पुत्रिणी भवेत्।
सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुरिति ॥

पुत्रकार्य्यश्राद्धादेः सपत्नीपुत्रेण सिद्धेर्भर्त्रनुज्ञां विना तादृश्याः पुत्रो न कार्य्यः। उभयोरपि तत्र कार्य्यस्य तेन निष्पत्तेः। भर्त्तुर्हि स औरस एव मुख्यः तस्या अपि दत्त-कादुगौण इति तादृश्या भर्त्रनुमतिमन्तरेणोत्तरो न प्रतिग्राह्य इति तात्पर्य्यार्थः वस्तुतस्तु।

भ्रातॄणामेकजातानामेकश्चेत् पुत्रवान् भवेत्।
सर्वांस्तांस्तेन पुत्रेण पुत्रिणो मनुरब्रवीदिति।

वचनद्वैतस्यापि भ्रातृ पुत्रस्य गोत्रदत्तक पुत्रत्वादि सम्भ-
वेऽस्य. पुत्रप्रतिनिधित्वं कार्य्य पूर्व्वमन्यतया मिताक्षरास्मृति
चन्द्रिकादौ व्याख्यातत्वात्. दि जीवति भार्य्यया स्वातन्त्र्येण
तदननुमतो न पुत्रीकरणीय इति भर्त्तुरनुज्ञानादुच्यते त्य-
स्यार्थ: । मृते तु तस्मिन् यत्पारतन्त्र्यन्तदनु मृते तु तस्मिन् पार-
तन्त्र्यन्तदनुमतिरेवापेक्षिता । एवं सति दृष्टार्थता भवति-
प्रतिषेधस्य ।

तस्माद्दत्तानुज्ञे मृतेऽपि भर्त्तरि भार्य्याया दत्तकादिक-
रणसंविधानम् । मनुवचनद्वयस्य पूर्व्वोक्तार्थकत्वे उपपत्तिरपि
मिताक्षरादावेवोक्ता । यदपुत्रस्य रिक्थग्रहणाधिकारिक्रमपरे
पत्नी दुहितर इत्यत्राप्रज: स्त्रीधनमित्यत्र च भ्रातृपुत्र सपत्नी-
सुतयो: पत्न्यादि भर्त्राद्यभावेऽधिकार प्रतिपादनविरोधापत्ते-
रिति । तच्च तत्रैव प्रपञ्चयिष्यते । अनेकपुत्र सद्भावेऽपि ज्येष्ठ:
पुत्रो न देय: । ज्येष्ठेन जातमात्रेण पुत्री भवति मानव इति ।
पुत्रकार्य्यकरणे तस्यैव मुख्यत्वाभिधानात् ।

क्रीतस्वयंदत्त कृत्रिमेष्वपि समानन्यायत्वादेकपुत्र ज्येष्ठ-
पुत्रयोर्निषेध: । अतएव बह्वृच ब्राह्मणे हरिश्चन्द्रोपाख्याने
क्रीतेऽपि ज्येष्ठपुत्र प्रतिषेध शिनश्शेफं मध्येष्ठपुत्रं विक्र-
णीत इवाचेति ।

पुत्र प्रतिग्रहप्रकारस्तु । पुत्रम्प्रतिग्रहीष्यन्बन्धूनाहूय रा-
जनि चावेद्य निवेशनस्य व्याहृतिभिर्हुत्वाऽदूरबान्धवं बन्धु
सन्निकृष्टएव प्रतिगृह्णीयादिति वशिष्ठोक्त: ।

अदूरबान्धवमित्यत्र देशभाषाविप्रकृष्टस्य प्रतिषेध: ।

एवं क्रीतादिष्वपि । समानन्यायत्वात् । कल्पतरौ त्वदूर-

बान्धवमसन्निकृष्टमेवेति पाठं लिखित्वाऽदूरबान्धवं सन्निहित-मातुलादिकम्। असन्निकृष्टमेव। अविज्ञात गुणा दोषमपि। अप्यर्थएव रत्नाकार इति व्याख्यातम्। सन्देहे चोत्पन्ने दूरे-बान्धवे शूद्रमिव स्थापयेदित्याचयते लोकेन च वल्लंकायतामि-तीति च वचिह्न वचनमधिकं लिखित्वैवं विहृतम्। सन्देहे बान्ध-वानामसन्निधानाज्जाति सन्देह उत्पन्ने शूद्रमिव संस्कारहीन-मेव स्थापयेत्। शूद्रोऽपि हि क्षतपुत्रो भवतीत्यभिप्राय इति।

क्रीतस्तु पुत्रस्ताभ्यां विक्रीत इति। ताभ्यां मातापितृभ्यां माता भर्त्तुरनुज्ञया पित्रा वा मूल्यग्रहपरस्य दत्तः। एकपुत्रः ज्येष्ठपुत्रं वर्ज्जयित्वा आपदीत्येव। सजातीयेष्वित्युपसंहा-रात्सवर्णएव। यत्तु मनुनोक्तम्।

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्।

स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपिवेति॥

तद्गुणैः सदृशोऽसदृशो वेति व्याख्येयम् तु जात्याऽसदृश इति सजातीयेष्वित्यनेन विरोधापत्तेः। बौधायनोऽपि। मातापित्रोर्हस्तात्क्रीतोऽन्यतरस्य वा योऽपत्यार्थं गृह्यते स क्रीतक इति। कृत्रिमस्तु पुत्रार्थिना स्वयं धनक्षेत्रादि प्रदर्शनादि-ना प्रलोभ्य त्वं मे पुत्रो भवेति यः सवर्णः पुत्रीकृतः स उच्यते। मातापितृविहीनश्चेत्।

तत्सद्भावे तत्परत्व तया तेन पुत्री भवितुमशक्यत्वात्। मनु विष्णू अपि। सदृशं तु प्रकुर्य्यातां गुणदोष विचक्षणम्।

पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिम इति॥

सदृशं सवर्णम्। प्रकुर्य्यातां मातापितरौ मिलितौ प्रत्येकं वा।

दत्तात्मा तु स्वयन्दत्तः स्वयमेव स्वात्मानमन्यस्मै दत्तवांस्तथा-

त्वत्पुत्रो भवामीति स्वयमुपगतो मातापितृविहीनस्ताभ्यां त्यक्तो वा सवर्णो पतितः स उच्यते। तथा च मनुः।

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।
आत्मानं स्पर्शयेद्यस्मै स्वयन्दत्तस्तु स स्मृत इति।

अकारणात् पातित्यादिकारणमन्तरेणैव दुर्भिक्षादौ पोषणाद्यसामर्थ्यादिना मातापितृभ्यां त्यक्तः स्वतन्त्र इत्यर्थः। यस्तु गर्भस्थितोऽपरिणीतावस्थायां सवर्णाज्जाराज्जातो गर्भिण्यास्तस्यां परिणीयमानायां विन्नः प्राप्तः विद्लृ लाभ इत्यस्य निष्ठान्तं रूपम्। नुदविदेत्यादि सूत्रेण निष्ठासम्बन्धितकारस्य नकारः। स सहोढज उच्यते। स वोढुः पुत्रः। तथा च मनुः। या गर्भिणी संस्क्रियते ज्ञाताऽज्ञातापि वा सती।

वोढुः स गर्भो भवति सहोढ इति चोच्यते॥

विष्णुरपि। सहोढः सप्तमः। गर्भिणी या संस्क्रियते तस्याः पुत्रः स तु पाणिग्राहस्येति। सप्तम इति तदीयपाठक्रमापेक्षया। उत्सृष्टो माता पितृभ्यां त्यक्तो यो गृह्यते पुत्रार्थिना सोऽपविद्धो नाम गृहीतुः पुत्रः। एतावपि सवर्णावेव। तथा विष्णुरपि। अपविद्धस्त्वेकादशः पित्रा मात्रा च परित्यक्तः स येन गृहीतः। वसिष्ठः। अपविद्धः पञ्चमोऽयं माता पितृभ्यामपास्तं गृह्णीयात्। एकादशत्वं पञ्चमत्वं तत्तत्पाठक्रमापेक्षया।

यस्तु मनुना गौणपुत्रमध्ये पारशवाख्यः शूद्रापुत्रः परिगणितः स योगीश्वरेण सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिरित्युक्तोपसंहारव्याजेन नियमकरणाशक्त्या च कथञ्चिदपि सजातीयत्वासम्भवान्नोक्तः। अतएव जातोऽपीत्यादिना

शत्वेन स भक्तः। द्विजातस्य शूद्रापुत्रस्यान्याभावेऽपि पित्र्य-धनकृत्स्नहरत्वाभावाश्च। तच्च वक्ष्यते। तथा च मनुः।

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम्।
स पारयन्नेव शवस्तस्मात् पारशवः स्मृत इति॥

बौधायनोऽपि। द्विजाति प्रवराच्छूद्रायां जातः कामात्पारशव इति। तत्रौरसादयो गौणाः पुत्रा मुख्यस्त्वौरसएव।
तथा च मनुः। क्षेत्रजादीन् सुतानेता नेकादश यथोदितान्।
पुत्र प्रतिनिधीनाहुः क्रियालोपान्मनीषिणः॥

क्रियालोपात्परिणयादि क्रियालोपादि क्रियालोपादिति प्रतिनिधित्वे हेतुः। स्मृति चन्द्रिकायान्तु। औरसाभावे तत्कर्त्तव्यश्राद्धादि क्रियालोपादुबिभ्यतो मनीषिण ऋषय एकादश पुत्र प्रतिनिधीन् कर्त्तव्यत्वेनाहुरिति व्याख्यातम्।
वृहस्पतिः। पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्वशः।
सन्तानकारणन्तेषामौरसः पुत्रिका दश॥
पुत्र प्रतिनिधी कर्त्तव्येनाहुरिति व्याख्यातम्।
वृहस्पतिः। आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतः।
तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना॥
ब्रह्मपुराणे। दत्तकश्च स्वयन्दत्तः कृत्रिमः क्रीतएव च।
अपविद्धाश्चये पुत्रा भरणीयाः सदैव हि॥
भिन्नगोत्राः पृथक् पिण्डाः पृथग्वंशकरास्तथा।
सूतके मृतके वा पित्र्यहाशौचस्य भागिनः।
अपि कन्यान्नदातॄणां क्षेत्रबीजवतान्तथा।
शूद्रो दासः पारशवो विप्राणां विद्यते क्वचित्॥
राज्ञातु शापदग्धानां नित्यं व्ययवतान्तथा।

न्त्याएव रिक्थलोभेन प्रसक्तो निषिध्यते नियोगस्वीकार इति न भवदुक्त प्रसक्ति प्रतीचेति वाच्यम् पत्न्या एव तत्र प्रस्तुतत्वात्तद्विषय भार्य्यापरत्वानुपपत्तेः। अतएव धारेश्वरादिभिर्नियोगार्थिं पत्नीपरत्वे पत्नीत्यादिवाक्यस्येदमेव वशिष्ठवचनं प्रमाणतयोपन्यस्तम्। तस्मान्नारद वशिष्ठ वाक्य बलात् संसृष्टिभर्तृधन ग्रहणप्रतिषेधः पत्न्या बृहस्पतिवचने चानपत्यस्य धर्म्मोऽयमभार्य्या पितृकस्य चेति कथनात्पत्न्यां सत्यां सोदरस्यापि संसृष्टिभ्रातृधन ग्रहणप्रतिषेध इति विरोध आवश्यकः कथञ्चिद्विषय व्यवस्थया परिहर्त्तव्योऽपरिहृतौ न्यैः परिह्रियते सन्दंशोत्थित प्रकरणबलात्प्रसक्त मप्यभार्य्या पितृकस्य संसृष्टि विशेषणत्वमन्यथासिद्ध नारदादि वाक्यानुरोधाद संसृष्टि परत्वावश्यक तया बाध्यते। वाक्यविरोधे प्रकरणस्याप्रयोजकत्वात्।

नचायमिति सर्वनाम्ना संसृष्टिधन ग्रहणरूपधर्म्मस्य प्रक्रान्तस्यानेन विशेषाभिधानादनपत्यस्येतिवदभार्य्यापितृकस्येत्यस्यापि संसृष्टि प्रमीतविशेषणत्वमिति वाक्ययोरेवायं विरोधः न वाक्यप्रकरणयोरिति वाच्यम्। सर्वनाम्नः संसृष्टि धन ग्रहणपरामर्शकत्वेऽपि सोऽयमनपत्यसंसृष्टि स्वामिधन ग्रहणरूपो धर्म्मो भार्य्यापितृरहितस्यासंसृष्टिनोऽप्यनपत्यस्य प्रमीतस्य। असंसृष्टिविभक्त प्रमीतस्य धनन्तु भार्य्यापितृ सहितस्यैवानपत्यस्य सोदरो गृह्णीयान्नभार्य्यापित्रन्यतरवदिति वाक्यार्थोपपत्तेः। चकारोऽप्येव मनुक्तासंसृष्टि समुच्चयार्थो व्याख्येयः अतएवासंसृष्टविषयेणानेन प्रकरणविच्छेदे जाते संसृष्टानान्तु यः कश्चिदित्यग्रिमवाक्ये संसृष्ट पदोपादानमपि

केचित्तु निरिन्द्रीयपद समभिव्याहारान्निन्दाभाव परत्वादि-त्याक्षुस्तत्र। दायादत्वांशे निन्दायानिषेध कल्पनायामभावात्। रागाद्याय गृहस्य प्राप्तेर्बिर्त्यमनुवादासम्भवात्। अनिन्द्रियत्वन्तु पुम्पारतन्त्र्यात्कथञ्चिदनुवादः। वस्तुस्वभाव विपरीत निषेधकल्पनस्य बाधात् तस्मात्पूर्वोक्त एव समाधिः। पराशरस्मृतिटीकायां विद्यार्णवादिना यद्धनं प्रामन्त इविभाज्यमिति व्याचख्युः पत्नीव तस्मृहे पत्न्या अंशोनास्तीत्यदायादपदस्यार्थः। तत्र हेतुरनिन्द्रिया इति इन्द्रियं वै सोमपीथ इत सोमेऽपीन्द्रियशब्द प्रयोगात्ततोनिर्गाता इति सोमपानानधिकृता इति पत्नीवतगृह प्रशंसेति। इति पत्न्यधिकार विचारः।

पत्न्यभावे दुहितरोऽपुत्त्र विभक्तासंसृष्टिधनभाजः।

तथा च मनुः। यथैवात्मा तथा पुत्त्रः पुत्रेण दुहिता समा।

तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्॥

बृहस्पतिरपि। अङ्गादङ्गात्सम्भवति पुत्त्रवद् दुहिता नृणाम्।

तस्मात् पितृधनन्त्वन्यः कथं गृह्णीत मानव इति॥

अत्र पुत्रेण समा पुत्त्रवदिति च साक्षाज्जन्यत्वेऽपि पुत्त्रे पितृवयवानां बाहुल्येन संक्रान्तेर्दुहितरि च पत्नीनां। पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियाः। इत्यादि-वचनैः स्मृतिष्वायुर्वेदे च प्रतिपादनात्पुत्त्रतुल्यत्वं दुहित बलमिति द्रष्टव्यम्। आत्मनि। आत्मा वैजायते पुत्त्र इत्यात्मभूत-पुत्त्रतुल्यायामित्यर्थः। तिष्ठन्त्यामित्यनादरे सप्तमी तामना-दृत्येत्यर्थः।

यद्यप्यनेनौरसपुत्त्राभावे दुहितुर्धनग्रहणमित्यत्र आय एतस्यापि गौणपुत्त्र पत्न्योरभावे दुहितुर्धनग्रहणमिति को-

बाधकानां वचनानां विना कारणं विशेषपरत्वकल्पनानुपप-
त्तेश्च । किञ्च । अपत्ये अन्यादृशात्सम्प्रतीत्यादिना पुत्रिका
विषयेण वचसा पुत्रिकाया धनग्रहणे उक्ते पुनः ।

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ।
कृताकृता वा पुत्रस्य पितुर्धनहरी तु सा ॥

इत्यनेन पुनर्धनहरत्व प्रतिपादनन्तेनैव मुनिना भिन्नमायां
विवरणमात्रतयाऽपुनरुक्तत्वं कर्त्तव्यं स्यात् । सामान्य विशेष
विषया तु स्पष्टमेवा पौनरुक्त्यम् । सदृशी पितृ सवर्णा । सदृशेन
सवर्णेनोढेति प्रकृष्टापकृष्ट वर्णसम्बन्ध निरासाय । तज्जात-
स्योत्तमवर्णो मातामह श्राद्धादि निषेधादिति जीमूतवाहनोक्त
मनादेयम् । ऊढापदेनैवाधमवर्ण सम्बन्ध निरासात् । न-
ह्यधमवर्णोढत्वमुत्तमवर्णायाः सम्भवति । तस्मादुत्तमवर्ण
निरासार्थमेव सदृशग्रहणम् । ननु नारदेन कन्यारूपाणां
पितृ व्यादर्शितानां सर्वासामेव दुहितॄणां पितृधनप्राप्ति
संसर्गतोऽभिहिता । यथाह ।

स्याच्चेत् दुहिता तस्याः पित्र्योंऽशो भरणे मतः ।
असंस्काराद्धरेद्भागं परतो बिभृयात्पतिरिति ॥
तस्या इति पतिपुत्रविहीन पत्नीमधिकृत्याह ।

तेन तादृश्या यदि दुहिता विद्यते तस्या भरणनिमित्तमात्र
पित्र्योंऽशस्तस्मात् विवाह संस्काराद्भरणार्थमेव सा पितृधनभागं
हरेत्परतो विवाहादूर्द्ध्वं पतिस्तां बिभृयात् । तेन तावन्मात्र-
भरणार्थमपि नाल्पमपि ततो गृह्णीयात् । यथेष्ट विनियोगार्थन्तु
कन्यायाः पितृधनग्रहणं दूरापास्तमेव । ततश्चास्यापवादकानि
दुहितुः पितृधनप्राप्ति प्रतिपादकानि वचनानि सर्वाणि पु-

त्रिका विषयाण्येव वाक्यानि। अन्यथा द्वयोरपि दुहितृ सामा-न्य विषयतयोत्सर्गापवादत्वानुपपत्तेः। तस्माद्वारेश्वरादिमत मनुमन्तव्यमिति चेन्न। एवं यदि नारदवचनं विभक्तवि-षयं स्यात्। पौर्वापर्य्यपर्य्यालोचनया संसृष्टाविभक्तविषयत्वात् स्फुटमवगम्यते। ततश्च विभक्तविषये दुहितृमात्रस्य पत्यभावे पितृधने ग्रहणं प्रतिपादकानि प्रापकाण्येव नापवादकानीति पुत्रिकामात्र विषयत्वे तेषां किमपि बीजम्पश्यामः। यत्तु स-कल पितृधनग्रहणाधिकार प्रतिपादकतया कन्यास्थ इत्यादि देवलवचनं जीमूतवाहनेनोपन्यस्तं तत्पूर्वापरविरुद्धम्। जीवद्विभागे कन्यास्थः विवाहमात्रोपयुक्त धने तस्य प्रमाणत-योपन्यासात्। तदपि चास्माभिः प्रागिरस्तम्। दुहितृष्वपि प्रथममप्रत्ताः पितृधनं गृह्णीयुस्तदभावे प्रत्ताः तासामपि मध्ये प्रागभाव प्रतिष्ठिता स्तदभावे प्रतिष्ठिता सर्वा समान रूपास्त, समं विभज्य गृह्णीयुरित्यर्थः सिद्धम्। तथा च कात्यायनः।

पत्नी पत्युर्द्धनहरी या स्यादव्यभिचारिणी।

तदभावे तदेति। गौतमः. स्त्रीधनं दुहितृणामप्रत्ताना-मप्रतिष्ठितानाञ्चेति। अप्रतिष्ठिता निर्धनाः। यद्यपि स्त्री-धनमित्युक्तं तथापि तुल्यन्यायतया पितृधन विषयत्वं तत्। वन्ध्यत्वादिना सन्तानरहिता प्रतिष्ठितेति तु न युक्तम्। तस्याः सन्तानसुखेनादृष्टोपकाराभावे न धनधारित्वायोगात्। स-हशी सदृशेनोढेति प्राक्पठितं बृहस्पतिवचनं कृतिचन्द्रिका-कार द्वयं व्याचख्यौ मन्त्राद्यानि चत्वारि विशेषणानि सख्या अनुग्रहर्थ्यग्राहिणी दुहितृविषयाणि। ततः अग्राहिणी दुहितृ विशेषणे द्वे अर्थयिष्टे। कृतात्कृता वेत्यत पुत्रिकेति

विशेषव्याख्याकारः। इतरत्र दुहितेति विशेषव्याख्याकारः। वा श-
ब्दश्च व्यवस्थित विकल्पार्थः। एवञ्चायमर्थः। औरसपुत्रवि-
हीनस्य पितुर्धनं द्विविधापि पुत्रिका-पत्न्याः पूर्वं गृह्णीयात्।
सवर्णादि विशेषणोपेता तु दुहिता तत ऊर्द्ध्वमिति। एवञ्च
पत्न्या ऊर्द्ध्वं सवर्णादि विशेषणोपेत प्रतिष्ठिताऽप्रतिष्ठितोढा-
नूढानां दुहितॄणां समवाये प्रागनूढैव गृह्णाति पित्रा भर्त्तव्य-
त्वात्। तदभावे ऊढाऽप्रतिष्ठिता। भर्त्रा भर्त्तव्यत्वेऽपि भर्त्तु-
र्भरणासामर्थ्येना प्रतिष्ठितत्वात्। तदभावे प्रागुक्तया पत्न्या सव-
र्णादि विशेषणोपेता प्रतिष्ठितापि धनं गृह्णाति। अन्यैस्तु
कृतेति पुत्रिका परमकृतेति दुहितृमात्र परमभ्युपेत्य वाश-
ब्दस्य नास्यापरमास्थाया खिलं दुहितृमात्र विषयं विशेषव्याख्या-
कारमन्तरेणैव व्याख्यातम्। सेत्यनेन दुहितृमात्र परामर्शात्।
दुहितर इति बहुवचनं सजातीयानां समांशोऽसमानजाती-
यानां वर्णक्रमेण विशेषांश इति प्रतिपादनाय।

इति दुहितुरधिकारः।

दुहितुरभावे दौहित्रः।

च शब्दादनुक्त समुच्चयार्थात्। तथा च विष्णुः।

अपुत्र पौत्र सन्ताने दौहित्रा धनमाप्नुयुः।
पूर्वेषान्तु स्वधाकारे पौत्र दौहित्रकाःसमाः॥

अपुत्र पौत्रेति दुहितृ पर्य्यन्ताभावोपलक्षणम्। मनुरपि।

असंस्कृता वा कृता वापि यं विन्देत्सदृशात्सुतम्।
पौत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनमिति॥

पौत्रीत्यनेन यथा पुत्राभावे पौत्रः पितामहधनाधिकारी
वा दुहित्रभावे दौहित्र इत्युक्तम्। वृहस्पतिरपि।

यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।
तथैव तत्सुतोऽपीष्टे मातृमातामहे धने ॥

यथा येन दौहित्रदेयपिण्डेन दुहिता पितृधनाधिकारिणी तथैव तेनैव पिण्डदानेन दुहितृसुतोऽपि मातामहधने स्वामी सत्स्वपि बन्धुषु पित्रादिष्वित्यर्थः । न च पुत्रिकापुत्रविषयमिदं वचनम् । तस्या इति तत्सुत इति च सर्वनामभ्यामुक्तदुहितृमात्रपरामर्शात् । अतएव मनुरपि दौहित्रमात्रस्यैव मातामहधनाधिकारं दर्शयति ।

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत् ।
स एव दद्याद्द्वौ पिण्डौ पित्रे मातामहाय च ॥
पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहत इति ॥

पितुरिति मातुः पितुरिति व्याख्येयम् । अतएवाग्रे मातामहाय चेत्याह । अथवा यथा स स्वपितुरखिलं रिक्थं गृह्णाति तथाऽपुत्रस्य मातामहस्यापि । स्वयमेव तत्पुत्रकार्यकारित्वात् । तदेवाह स एवेति । स्वपित्रे मातामहाय चेत्यर्थः । मातापितराविति च न यथाक्रममन्वयः । किन्तु । पौत्रस्य पिता दौहित्रस्य माता धनस्वामिनो देहतः सम्भूताविति यथायोग्यम् । केचिदपुत्त्रपौत्रेति यथाश्रुतविष्णुवचनात् तौ दुहितृतः प्राग्दौहित्रस्य धनाधिकारमाहुः तद्योगीश्वरविरोधात्तथैव तत्सुतोऽपीति बृहस्पतिवचनेऽपि दुहितृतस्य अपत्यभावावगमे ज्ञेयम् ।

इति दौहित्राधिकारः ।

प्रत्यासत्त्या भ्रातृभगिनी धनाधिकार विनिगमकतया अनकाङ्क्षणा धनग्रहणविनिगमकत्वा सम्भवात्। द्वन्द्वस्यानीदैकशेषान् तुल्यतावगतो प्रत्यासत्तेर प्रतीतत्वाच्च। सत्यां हि क्रमाकाङ्क्षायां सा क्रमनियामिका नत्व सत्यामपि। तस्मात्पित्रोस्तुल्य स्वाम्यादिभक्त्यैवानप विधुर पुत्रधन ग्रहणमिति। श्रीकरस्तु युक्तम्। पिता हरेद पुत्रस्य रिक्थं स्वर्यातस्य ह्यपुत्रस्य माता दाय मवाप्नुयादित्यादि वचनेषु पितुर्मातुश्च निरपेक्षस्वाम्य प्रतीतेर्युगपद्ग्रहणायोगात्। ब्रीहियवयोर्निरपेक्ष साधनत्व प्रतीतौ मिश्रत्वायोगवत्। केचित्तु मातुर्गर्भधारणपोषणादिनात्यन्तोपकारित्वात्स्मरणन्तु पितुर्माता गौरवेणातिरिच्यते इत्यादि स्मरणाच्च प्रथमं मातुर्धनाधिकार माहुस्तदपि तुच्छम्। पितुरपि संस्कार दक्षिसम्पादनादिना बहुधा संविधानत्वात्तयोरपि पिता श्रेयान् वीज प्राधान्यदर्शनादित्यादि स्मरणेन सत्प्रतिपक्षत्वाच्च गौरवमात्रस्य धनग्रहण प्रयोजकत्वे। उत्पादक ब्रह्मदातोर्गरीयान् ब्रह्मदः पितेत्यादि स्मरणाच्च पितृतोऽपि पूर्वमाचार्यस्याधिकारापत्तेर्भ्रातृ भ्रातृपुत्रयोश्च सतोः पितामहपितृव्यादीनामेव प्रागधिकारापत्तेः। श्रीमतवाहनस्तु।

पितरावित्यस्मात्पितृक्रम एव वा गम्यते।

तथाहि पितृ प्रातिपदिकात्प्रथमम्पितुरवगतौ द्विवचनाच्च तेनैकशेष कल्पनायां सरूपैकशेषा सम्भवे मिथुनत्वादि वचनस्याहाच्च विरूपैकशेषत्वनिश्चये मातुरवगमात्। अतः क्रमज्ञानं क्रमाभिधान व्याप्त क्रमाभिधाने व्यापकेऽपि वर्त्तमाने निवर्त्तत इति श्रीकरोक्तिर्विपरीत क्रमोक्तिश्च विज्ञानेश्वराणा न युक्तेत्याहु। तस्मात्रैयायिक क्रमस्यात्राव्यवस्थितत्वाद्ध

प्रकारो य: पिता महागुरु लक्षणोपेत: स गुरुर्य: क्रिया: कृत्वा वेदमस्मै प्रयच्छतीत्यादि योगीश्वरादि वचोभि: प्रतिपादितो माता च तदाज्ञा वशवर्त्तित्वादि पतिव्रतात्व प्रयोजक समस्त-लक्षणरहिता। तयोर्मध्ये मातुरपेक्षया पिते वाधिकाभ्यर्हित:। यत्र तु मातानन्यत्वादिविलक्षणा पतिव्रता गुणोपेता पिता तु जन्ममात्रप्रद: तत्र मातैव पितुरपेक्षयाभ्यधिकमान्या। चिरकारि कोपाख्यानादौ महाभारतादयो वसुपाख्यान स्वर-सादयमर्थे उन्नीयते तदत्रापि मन्वादिवचनैरपुत्र पुत्रधन-ग्रहणाधिकार: क्वचित् मातु: प्रथमं क्वचित्पितु: प्रतीयमान एवमेव व्यवस्थापयितुमर्ह:। तथाहि।

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात्।

मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनमिति मनु:।

भार्य्या सुत विहीनस्य तनयस्य मृतस्य च।

माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञयेति वृहस्पति:। पुनर्मातुरेव। पिता हरेदपुत्रस्य रिक्थं भ्रातरएव वेति॥

तदभावे पिता तदभावे मातेति प्रागदर्शितं दृहद्विष्णु-वचनानि। योगीश्वरवचने तु पितरावित्यत्र विज्ञानेश्वरोक्त रीत्या प्राग्माता तदनु पिता। अन्यमते सम्भूयविभाग: पितु र्वा प्राथम्यमिति विप्रतिपत्तौ पितुरधिकमान्याया माता सा पितुरपेक्षया प्रथमाधिकारिणी। या तु पितुरधिकया न्यून-मानभाक् सा पितु: पश्चात्। युक्तञ्चैतत्। इत्यादि सन्नि-धानमकुर्वत: पितुरपेक्षया मातुरेवाधिकोपकारकत्वाद्धनग्रह-णम्। इत्यादि सन्निधानकर्तृत्व तस्य यावज्जीवमरण पो-षणादिमातिशयितोपकारकस्य धनग्रहणमिति सर्व स्मृतीनां

तच्च निबन्धमात्रानुसारात् भवतीत्यादि सुधीभिर्विभाव्यम् ।

पित्रोरभावे भ्रातरो धनभाजः ।

यद्यपि पुत्रवत् भ्रातृगामि अपुत्रस्य स्वर्यातस्य भ्रातृगामि द्रव्यं तदभावे पितरावित्यादि शङ्खपैठीनसिवचनयोः भ्रातर एवेति । मनुना च । पितृतः प्राक् भ्रातृणामेव ग्रहणं प्रतीयते । मातर्यपि च वृत्तायां पितुर्माता हरेद्धनमिति च मनुवचने भ्रातृतः प्राक् पितामह्याः तथापि क्रमपरयोर्योगीश्वर वृहद्विष्णु वचनाविरोधाय तेषामन्वनाधिकारमात्र परत्वमेतत्क्रमाविरोध सूचनार्थमेव मनुना भ्रातर एवेति पैठीनसिनापि ज्येष्ठा वा पत्नीति वा शब्दः प्रयुक्तोऽन्यथातुल्यकक्षाधिकारिषु तत् प्रयोगोऽत्यन्तमयुक्तः स्यादिति मिताक्षराकारादयो वदन्ति । कल्पतरुकारस्तु पत्नी भ्रातृसत्त्वे श्राद्धाद्यधिकारिणी साध्वी पत्नी प्रथमाधिकारिणी तदभावे तु भ्रातृ पितृतोऽनन्तरम् । पितृभ्रातृसत्त्वे तु पितृपितामहाद्युपार्जितं यद्विभागेन पुत्रे संक्रान्तधनन्तत्र पुत्रे प्रमीते पित्रोः पितृद्रव्याविरोधेन स्वतनोपार्जितं तत्तत्पित्रोः सतोरपि भ्रातॄणामेवेत्याह मम तु प्रतिभाति मातर्यपि च वृत्तायामिति मनु वाक्ये । तदभावे मातापितराविति शङ्खपैठीनसिवचनयोः ।

ततो दायम् अपुत्रस्य विभजेरन् सहोदराः ।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा ।
सवर्णा भ्रातरो माता भार्या चेति यथा क्रमम् ॥

तेषामभावे गृह्णीयुः कुल्यानां सहवासिन इति देवलवचने । सर्वत्रापि वृत्तायान्तदभावे । तथा क्रमेत्यादिपदैः क्रमप्रतीतेर्योगीश्वर वृहद्विष्णुवचनयोरेव क्रमपरत्वमितरेषा-

न्वविकारमात्र परत्वेन सहविरोधेन तत्तत् स्थाननिवेशोऽप्यस्तु-तिरिति समाधिर्नैव साधुः किन्तु क्षेत्रजादि-पुत्र स्थले यथा स्मृति वचन क्रमविपर्य्यास औरसानु कूल्यप्रातिकूल्य गुण-वत्त्वागुणवत्त्वादिभिर्व्यवस्थापित स्तथात्रापि दायभाग प्रकरणे पुत्रादीनाम्पित्राद्युपकारकत्वकीर्त्तनस्य गुणवत्त्वादि कीर्त्त-नस्य वा नन्य प्रयोजनत्वात्प्रत्यासत्तितारतम्यवत्। धन स्वाम्यु-पकाराति शयानतिशय गुणवत्त्वागुण वत्त्वादिभिर्यथा वचनं स सर्वोऽपि क्रमविपर्य्यासः समाधयोऽन्ये तु समाधयः कुशका-शावलम्बन मात्रतुल्या अनु पादेया इति। एवं मयेऽपीति सर्वं सुस्थम्। भ्रातृष्वपि प्रथमं सहोदराः।

अनन्तरः सपिण्डाद्यस्तस्य तस्य धनम्भवेदिति मनुना।

सहोदरा भ्रातरो यस्य सकुल्या बान्धवास्तथा।

यस्त्वासन्न तरस्तेषां सोऽनपत्यधनं हरेदिति॥

बृहस्पतिना च।

प्रत्यासत्त्यतिशयस्यैवा सति विशेष वचने विनिगमक-त्वेनोक्तेः। भिन्नोदराणां मातृकृत विप्रकर्षात्। भ्रातर इति सामान्य ग्रहणात्सोदराभावे भिन्नोदराः। इदमेव व्यक्त मुक्तं संग्रहकारेण।

सोदर्याः सन्त्यसोदर्या भ्रातरो द्विविधा यदि।

विद्यमानेऽप्य सोदर्ये सोदर्या धनभागिन इति।

इति भ्रात्रधिकारः।

भ्रात्रभावे तत्सुताः भ्रातृ सुता धनभाजः।

न च तथा तत्सुता इति तथा शब्देन भ्रातृ पुत्रयोः सा-दृश्य प्रतिपादकात्। अनेकपितृकाणान्तु पितृतो भाग कल्प-

नेति वचनाच्चावयोः पित्रभावे विभज्यधन ग्रहणमस्त्विति वाच्यं विष्णु वचनाविरोधश्च तथा शब्दस्य च शब्दार्थत्वात्। अन्यथा तथा पदस्य पूर्ववाक्यव्यवस्थापनेन पित्रोर्म्मातृणाञ्च विभज्य-ग्रहणमित्यपि कुतो न स्यात्। तस्माद्विष्णु वचन विरोधान्नेत्यु-च्यते सोऽत्रापि तुल्यः। अनेक पितृकाणान्त्विति वचने भ्रातृ-भावे तेषामधिकारे सम्पन्ने कस्मिंश्चिदप्य पुत्रे भ्रातरि प्रमीते-ऽविद्यमानानां भ्रातॄणां सर्वेषान्तद्धन सम्बन्धे जाते तद्विभागात् प्रागेव तन्मध्येऽपि यदि कश्चिन्मृतस्तदा तत्पुत्राणाम्पितृव्यैः सह स-माने भागे प्राप्ते प्रागिव विभागमेव ते विभज्य गृह्णीयुर्न सर्वे पि-तृव्यसममित्येतदर्थम् भ्रातृपदं तत् पुत्राणाम्पितृव्यधनेऽन-धिकारात्। पूर्वाभावे परः पर इति योगीश्वर वचनात्तद-भावे भ्रातृ पुत्रगामीति विष्णुवचने भ्रातृपरामर्शकतत्पदेन भ्रातृभावाभिधानाच्च। भ्रातृ पुत्रेष्वपि प्रत्यासत्तिन्यायात्पूर्वं सोदरभ्रातृजास्तदभावे भिन्नोदरजाः युक्तश्चैतत्। असोदर-भ्रातृ पुत्रो हि धनिनो मातरं विहाय स्वपितामही विशिष्टस्य धनिपितुः पिण्डन्ददातीति सोदरभ्रातृ पुत्रात्तज्जन्यस्तदनन्त-रमेवाधिकारीति। न च सपत्नीमातृ त्रयाणां श्राद्धदेवतात्वा-त्सपत्न मात्रादीनामप्यस्ति तत्रानु प्रवेश इति वाच्यम्। मात्रादि शब्दानां स्वजननी पितृ जननी पितामह जननीष्वेव मुख्य-त्वात्तेनैव च रूपेण श्राद्धानुप्रवेशस्मरणात्। तथा स्मरन्ति।

स्वेन भर्त्रा सह श्राद्धं माता भुङ्क्ते स्वधाकरम्।
पितामही च स्वेनैव स्वेनैव प्रपितामहीति॥

सपत्नमात्रादीनां तु प्रवेशः प्रत्युत।
अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा।

भ्रात पुत्रौ स्वदुहितृभ्यामिति पार्थिवमात्रपरत्वात् तेभ्य इत्यत्र पुत्रश्च दुहितरश्चेति विग्रहे विरूपैकशेषेण दुहितृणा-मप्यत्र पुत्रेऽनुप्रवेशः शक्यते कर्तुं तथापि पुमांसो दायादाऽन स्त्रियः। तस्मात् स्त्रियो निरिन्द्रिया अदायादा इति श्रुतेरिति। श्रुतिविरोधात्तात्पर्यग्राहकप्रमाणाभावाच्च विरूपैकशेषोऽनुशिष्टो-ऽप्यत्र न ग्राह्य इति भाष्यकाराभिप्रायः। जीमूतवाहनोऽपि याज्ञवल्क्येन च पितादिदौहित्रस्यापि तद्गोत्रजातस्य पिण्डदाना-नर्हस्य क्रमेणाधिकारप्रतिपत्त्यर्थं गोत्रजपदग्रहणं कृतम्। सपिण्डस्त्रीणाञ्च व्युदासार्थञ्च तासामतद्गोत्रजातत्वात्। अतएव अर्हति स्त्रीत्वमुक्तौ बौधायनः। न दायन्निरिन्द्रिया अदा-यादाश्च स्त्रियो मता इति श्रुतेरिति। नायमर्थे स्त्रीत्वमन्वयः। पत्न्यादीनामधिकारो विशेषवचनाद् विरुद्ध इति। तन्न साधुः मन्वादिवचनेषु प्राग्लिखितेषु पितामह्या धनाधिकारस्य स्व-रूपग्राहिकयैव विधानात्तदेकवाक्यतया योगीश्वरवचनस्यापि विरूपैकशेषेण तत्संग्रहेऽपि श्रुतेस्तदन्यपरत्वेनाविरोधात्। जीमूतवाहनस्य तु मात्रधिकारविचारप्रस्तावे पितामह स-न्तानात् पूर्वं पितामह्याश्च परतः पितामह्या धनाधिकारः। पि-तृतः परतो मात्रधिकारवत्। याज्ञवल्क्येन मात्रधिकारप्रदर्श-नेनैव पितृव्यादिभ्यः पूर्वं पितामह्योरधिकारस्य सूचितत्वा-त् यच्चोक्तम् इति वदतोऽत्र च सपिण्डस्त्रीव्युदासार्थं गोत्रजग्र-हणं वदतः पूर्वापरविरोधात् सन्धानमपि नास्ति। स्वरूपग्रा-हिकया योगीश्वरवचने पितामह्याः पितृव्यादिप्रतीवदन-भिधानस्य तुल्यत्वात्तदेवादायादश्रुतिप्रवृत्तेर् विरोधात्। विचारस्य श्रीचरणोक्त प्राग्लिखितं तस्मान्निरिन्द्रिया इत्यादि

श्रुतिव्याख्याने तु कौमारस्त्रीग्रहणप्रतिषेधकत्वमेवास्याः श्रुते र्नास्तीति न वा शङ्कानवोत्तरम्। परन्तु बौधायनमुनिवचन-विरोधे तद्व्याख्यानकृत्यमुपपद्यताम्। अस्तु वा इन्द्रिय पदस्य वा-क्यशेषात्सामान्यपरता तथापि दायादत्वाभावाभिधानावलम्ब-नस्यान्यथा सत्वाद्विरोधस्तेन श्रुतेश्चान्यथाऽभिहितवचनीर्षे नानु-पपत्ति प्रस्तुत प्रतिषेध वाक्यतात्पर्य्यमात्रात्। तत्रार्षेर्यावि-ज्ञातेन हतेन ब्रह्महेत्यत्र वेति ध्येयम्। पितामह्या अभावे पिता-महादयः सगोत्राः सपिण्डा धन भाजः। भिन्नगोत्राणां सपि-ण्डानां बन्धुशब्देन ग्रहणात्। तत्रापि पितृसन्तानाभावे पितामही पितामहः पितृव्यास्तत्पुत्राश्च क्रमेण धन भाजः। पितामह सन्तानाभावे प्रपितामही प्रपितामहस्तत्सुताः तत्सूनवश्चेत्येव मासप्तमात्समानगोत्राणां सपिण्डानामपुत्रधन भाक्त्वम्। सपिण्डाभावे समानोदकानाम्। ते च सपिण्डाना-मुपरि सप्त। जन्मनामस्थानावधिका वा। यथाह मनुः।

सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते।

समानोदकभावस्तु निवर्त्तेता चतुर्द्दशात्।

जन्मनाम्नोः स्मृतेरेके तत्परं गोत्र मुच्यत इति॥

विष्णु वचने बन्धुसकुल्यपदाभ्यां सपिण्ड समोत्रौ गृह्येते इति प्रागेव प्रतिपादितम्। समानोदका अपि प्रत्यासत्तिक्रमे-ण धन भाजः। समानोदकाभावे बन्धवो धन भाजः। बन्ध-वश्च त्रिविधा आत्मबन्धवः पितृबन्धवो मातृ बन्धवश्च। तथा च स्मृतिः। आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुः सुताः।

आत्ममातुल पुत्राश्च विज्ञेया आत्मबान्धवाः॥

पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुः सुताः।

पितुर्मातुल पुत्राश्च विज्ञेयाः पितृ बान्धवा ॥
मातुः पितृष्वसुः पुत्रा मातुर्मातृष्वसुः सुताः ।
मातुर्मातुल पुत्राश्च विज्ञेया मातृ बान्धवा इति ॥

तत्रापि प्रत्यासन्नत्वात्प्रथम मातृबन्धवस्तदनन्तरम्पितृ बन्धवस्तदनु मातृबन्धव इति क्रमः । मनु स्मृतौ तदभावे सकुल्यः स्यादाचार्य्यः शिष्यएव वेत्यत्र सकुल्यशब्देन सगोत्र समानोदकानां मातुलादीनां बन्धुत्रयस्य च ग्रहणं योगीश्वर वचनेऽपि बन्धुपदेन मातुललक्षणमन्यथा मातुलादीनामग्रहणमेव प्रसज्जेतेति तत् पुत्राणान्धनाधिकारस्ततः प्रत्यासन्नानान्तेषामेव स नेति महदनौचित्यमापद्येत । बन्धूनामभावे आचार्य्योधन भाग्यद्यपि योगीश्वर वचनस्याचार्य्यो नोपात्तस्तथापि शिष्य उपात्तस्ततः प्रधान तमः प्रत्यासन्नतमश्चाचार्य्य औचित्यादुपलक्षणीयः । आचार्य्यः शिष्य एववेति मनुना । पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यस्तदभावेऽन्तेवासीत्यापस्तम्बेन च स्पष्टमेवाचार्य्याभावे शिष्यस्याधिकार बोधनाच्च । शिष्याभावे स ब्रह्मचारी सहाध्यायी धन भाक् । यस्यैकस्मादाचार्य्यादुपनयनाध्ययने । स ब्रह्मचारिणोऽभावे ब्राह्मण द्रव्य व्यतिरिक्तं राजा गृह्णीयात् । सहाध्यायिपर्य्यन्तमधिकार मुक्त्वा तदभावे ब्राह्मणधनवर्जं राजगामीति प्रागुदाहृत वशिष्ठ वचनात् । सर्वेषामप्यभावे तु ब्राह्मणा रिक्थ भागिनः ।

त्रैविद्याः शुचयो दान्तास्तथा धर्मो न हीयते ॥
अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः ।

इतरेषान्तु वर्णानां सर्वाभावे हरेन्नृप इति मनु वचनाच्च । ब्राह्मण द्रव्यं स ब्रह्मचारिपर्य्यन्ताभावे श्रोत्रियो ब्रा-

ह्मणाः प्रथमं गृह्णाति। तदभावे ब्राह्मणमात्रम्। यथाह गौतमः। श्रोत्रिया ब्राह्मणस्यान पत्यस्य रिक्थम्भजेरन्निति।

ब्राह्मणमात्रन्तु मनु वचने ब्राह्मणमात्र ग्रहणात्॥

नारदोऽपि। ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन।

ब्राह्मणस्यैव दातव्यमेनस्वी स्यान्नृपोऽन्यथेति॥

पुत्रादीनां पत्नीपर्यन्तानामन्दायहराणां वानप्रस्थादि विषयेऽपवादमाह योगीश्वरः।

वान प्रस्थयति ब्रह्मचारिणां रिक्थभागिनः।

क्रमेणाचार्य्य सच्छिष्यधर्म भ्रात्रेकतीर्थिन इति।

ब्रह्मचार्य्यत्र नैष्ठिको यति साहचर्य्यात्। तेनोप कुर्वाणस्य धनं पुत्रादिदौहित्रान्तानाम सम्भवात्पित्रादय एव क्रमेण गृह्णीयुः। क्रमश्चात्र प्रतिलोमो ज्ञेयः। तथा च नैष्ठिकस्य व्रतस्य धनमाचार्य्यस्तु यतेः सच्छिष्यस्य वानप्रस्थस्य धर्मभ्रात्रेकतीर्थिनः। धर्मभ्राता प्रतिपन्नो भ्राता। तीर्थग्रहस्या श्रमवाचित्वादेकतीर्थ्येकाश्रमी। धर्मभ्राताचासावेकतीर्थीचेत्यर्थः। शिष्यस्य स्वत्वन्तु न सहृत्वम्। दुर्वृत्त पुत्रादीनामपि धनानधिकारस्य प्रमाणान्तरेणैव प्राप्तत्वात्। तच्च वक्ष्यते। किन्त्वध्यात्मशास्त्र श्रवणधारणतदर्थानुष्ठानक्षमत्वं ग्राह्यम्। मदनरत्नकारस्तु। वानप्रस्थधन माचार्य्यो गृह्णीयाच्छिष्यो वेति विष्णुवचनं लिखित्वानुलोममेव क्रमं मत्वा वानप्रस्थधनमाचार्य्याभावे शिष्योगृह्णीयादित्याह। मत्वमंशास्त्राश्रमान्तरगता इति वशिष्ठादि वचनैर्नैष्ठिकादीनान्धन सम्बन्धाभावस्य वक्ष्यमाणत्वात्तद्धन ग्रहणाधिकारिकथनमत्रानुप पन्नं च रिक्थग्रहणस्य तेषां वसिष्ठादिभिर्निषेधेऽपि प्रकारान्तरात्तत्तदीयधनाधि-

कार प्रतिपादकमिदमविरुद्धमिति वाच्यम् । ब्रह्मचारी यतिश्चैव पक्वान्नस्वामिनावुभाविति वचनेन ब्रह्मचारिणश्च प्रतिग्रहादिनिषेधात् । अनिषेधादाधनमिति चेत् । न दानधर्मस्य तावत्

षण्णां मासस्य षण्णां वा तथा संवत्सरस्य वा ।
अर्थस्य निचयं कुर्यात्कृत माश्वयुजेऽथवा इति ॥

वचनाद्भोजनादि पर्याप्त यत्किञ्चिद्धन संग्रहोऽस्त्येव यतेरपि । कौपीनाच्छादनार्थं हि वासो वै बिभृयाद्यतिः ।
योगसम्भारभेदांश्च गृह्णीयात्पादुके तथेति ॥

वचनादस्य पुस्तकादिकिञ्चिदस्त्येव । नैष्ठिकस्यापि शरीरयात्रार्थं वस्त्रादि सम्बन्धश्चावश्यकः । तेन व्रतानान्तेवासिनान्तत्केन ग्राह्यमित्यपेक्षायां दायादान्तरापवादेनैतेऽधिकारिण उच्यन्त इति

अथ संसृष्टिधन विभागः ।

तत्र मनुः । विभक्ताः सहजीवन्तो विभजेरन् पुनर्यदि ।
समस्तत्र विभागः स्यात् ज्यैष्ठ्यं तत्र न विद्यत इति ॥

अत्र समविभाग नियमादेव विषमविभाग प्रकारनिरासे सिद्धे ज्यैष्ठ्यं तत्र न विद्यत इति पुनर्वचनं ज्यैष्ठ्यादि कृत एव विषमविभागो न भवति । बहुत्वधन संसर्गानुरोधेन तु विषम विभागो भवत्येवेति सूचनार्थम् । केचित्तु संसृष्ट द्रव्यापचयां ज्यैष्ठ्यादि कृतो विषमविभागो भवत्येव । संसृष्ट द्रव्यविभागस्तु सम एवेत्येतज्ज्ञापनाय ज्यैष्ठ्यमिति वाक्यशेष इत्याहुः ।

तन्न एतादृशव्यवस्थाया अभावात् प्रतीतेः ।

समस्तत्र विभागः स्यादित्युक्त्या द्रव्योपचयेऽपि साम्यनियम प्रतीतेः । संसृष्टि विभागेऽप्यविभक्त विभाग वदेव द्रव्याविरोधेन विद्यादि लब्धस्याविभाज्यत्वन्तुल्यमेव प्राप्तमपद इति ।

बृहस्पतिः। संसृष्टिनान्तु यः कश्चिद्विद्या शौर्य्यादिनाधिकम्।

प्राप्नोति तस्य दातव्यो ह्यंशः शेषाः समांशिनः॥

संसृष्टिना च पित्रादिनैव कर्त्तव्या नान्येन विभक्तो यः पुनः पित्रेत्यादि प्राक्लिखित बृहस्पति वचनादिति वदवः वयन्त पत्न्यथाष्यितादि गृह्णामित्यादि प्रायश्चित्तम्। अविभक्त विभागात्संसृष्टिष्वपि मिथो विभाग करणात्प्रागुपरतस्य पुत्राः प्रमीत पितृकाणान्तु पितृतोभाग कल्पनेति वचनात् स्वस्वपितरं ग्रंविभज्य गृह्णीयुः। यस्य तु संसृष्टिनो मृतस्य पुत्रादयो न सन्ति तत्र पत्न्युपगृह्णीत्यादि वचनात्पत्न्यादीनां प्राप्ते तदपवादत्वेन स्वर्यातस्य ह्य पुत्रस्यैवेत्यनुवृत्तावाह योगीश्वरः संसृष्टिनस्तु संसृष्टीति। तु शब्दात्पूर्वापवादः। अपुत्रस्य संसृष्टिनो मृतस्यधनं संसृष्ट्येव गृह्णीयान्नपत्न्यादिरित्यर्थः। एतेन पत्न्यादि पुत्रधन गृह्णाधिकारिगणे भ्रान्धिकारावसरे वचनमिदं प्रवर्त्तत इति व्याचक्षाणो जीमूतवाहनो भ्रान्तएवेत्यव सेयम्। अस्याप्य पवादः। सोदरस्य तु सोदरः।

दद्याच्चापहरेच्चांशं जातस्य च मृतस्यचेति।

संसृष्टिनः संसृष्टीत्यस्यात्रापि सम्बन्धः। तथाचायमर्थः। सोदरः संसृष्टी संसृष्टिनः सोदरस्य जातस्य पुत्ररूपेणोत्पन्नस्यांशन्दद्यात्तत्पुत्राय दद्यादिति यावत्। मृतस्य पुत्रादिरहितरूपेणाप्य जीवतोरंशमपहरेदात्मसात्कुर्यात् स्वयमेव गृह्णीयादित्यर्थः। पदद्वयन्तु यत्नं विनैव व्याख्याने तु शब्दबलायातमस्य पूर्वापवादत्वमनेन। एवञ्च सोदरासोदर संसृष्टिसद्भावे सोदर एव संसृष्टिनो हर संसृष्टिधन गृह्णाधिकारी न भिन्नोदर इति पूर्वोक्तापवादः।

यत्र तु भिन्नोदर एव संसृष्टी सोदरश्च ।
तत्र द्वयोर्विभज्य पुत्रादिरहितभ्रातृधनग्रहणमित्याह: ।

अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं हरेत् ।
असंसृष्ट्यपि चाददयात्संसृष्टो नान्यमातृज इति ॥

अत्रासंसृष्टिपदं काकाक्षिवत्पूर्वोत्तरार्द्धयोरपि सम्बध्यते । तथा संसृष्ट इत्यपि । तत्र पूर्वार्द्धे एकोदर संसृष्टः सोदर इत्यर्थकः । उत्तरार्द्धे तु संसृष्टित्वार्थकः अन्यमातृज इत्यनन्तरञ्चैवकारोऽध्याहार्य्यः । ततश्चायमर्थः ।

अन्योदर्य्यो सोदरोऽपि संसृष्टी चेद्धनं हरेत् ।

असंसृष्टी चेद्धनं हरेत् । असंसृष्टी चेदन्योदर्य्यो न हरेत् । तथा चान्वयव्यतिरेकप्रदर्शनेन भिन्नोदरस्य संसृष्टित्वमेवैकं धनग्रहणकारणं न भ्रातृत्वमात्रमित्युक्तं भवति । तथा संसृष्टः सोदरो संसृष्ट्यपि चेद्धनं हरेत्किमुत संसृष्टी । संसृष्टसंसृष्ट्यप्यन्यमातृज एवैको धनं न हरेत् । किन्तु सोदरेण संसृष्टिनापि सह विभज्य गृह्णीयात् । अत्रायं पर्य्यवसितोऽर्थः । असंसृष्टिसोदरे संसृष्टिभिन्नोदरे च सत्यपुत्रभ्रातृधनं सोदरत्वसंसृष्टित्वरूपैकैककारणयोगात्सममं विभज्य गृह्णीयाताम् । सोदरोऽपि चेत्संसृष्टी कारणद्वययोगेन बलवत्त्वात्सर्वं स एव गृह्णीयादिति । अत्र चैकैकनियमेनार्थद्वयपरकारणनिरासस्य सिद्धावपि दृढीकरणाय पुनर्निरासः । उभयथापि वाक्यव्युत्पत्तेः । पुंलिङ्गञ्च संसृष्टीत्याद्यविवक्षितमत एव मनुना सोदरभगिनीनामपि तद्धनग्रहणमुक्तम् । यथाह ।

विभक्ताः सहजीवन्तो विभजेरन् पुनर्य्यदीति

संसृष्टिविभागमभिधाय । येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।

म्रियेतान्यतरो वापि तस्य भागो न लुप्यते॥

सोदर्या विभजेरंस्तं समेत्य सहिताः समम्।

भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभय इति॥

तेषां संसृष्टिनां मध्ये योऽन्यतरः संसृष्टी ज्येष्ठः कनिष्ठोऽपि मध्यमो वांशप्रदानतो हीयेतानधिकार्यंशप्रदाने स्यात्। सार्वविभक्तिकत्वात्तसस्यर्थे तसिः। विभागकाले पातित्येनाश्रमान्तरपरिग्रहेण वा म्रियेत वाऽगृहीतभाग एव। तर्हि तस्य भागो न लुप्यते पृथगुद्धरणीयः। स च प्रथमं तत्पुत्रादिभ्यो देयः।

तदभावे सोदर्या भ्रातरो संसृष्टा अपि।

समेत्य देशान्तरगतास्तत आगत्य सहिता मिलिताः। ये च भ्रातरो भिन्नोदरा अपि संसृष्टाः संसृष्टिनः सनाभयो यस्य सोदरा भगिन्यश्च सममेवांशमेव विभजेयुर्विभज्य गृह्णीयुरित्यर्थः। अत्र सोदरभ्रातृभगिनीनामसंसर्गेऽपि संसर्गे च भिन्नोदराणामपि धनाधिकारमभिदधता मनुना योगीश्वरोक्त एवार्थः स्पष्टमुक्तो भवति। अत्र श्रीकरः। संसृष्टिनस्तु संसृष्टीत्यस्यासोदरसंसृष्टिमात्रविषयत्वेऽन्यानपेक्षत्वात् सोदरस्य तु सोदर इत्यस्याप्यसंसृष्टसोदरमात्रविषयत्वे तद्वा-त्वात् सोदरे संसृष्टिनि सोदरे चासंसृष्टिन्युभयोः प्राप्तौ यदि द्वयमेव प्रवर्तते तदान्योऽन्यसापेक्षयोरुभयोर्विधायकत्वं स्यात्। नचैकस्य सापेक्षनिरपेक्षोभयरूपतया विधायकत्वं विधिवैषम्यापादकमुचितम्। पर्वद्वये विकल्प सापेक्षं विधानम्। पर्वद्वये च निरपेक्षमिति उत्तरवेदिविधिवैषम्यापत्तेः यथा द्वयोः प्रणयन्तीत्यस्य न वैश्वदेव उत्तरवेदिमि-

त्यादि निषेधकृत विकल्प सापेक्षं पर्वद्वयं विधानमन्य पर्वद्वये तु निरपेक्षमिति सप्तमाधिकरणे विधि वैषम्यभयात्तथा सिद्धान्तितम्। तथा सिद्धान्तितम्। तथा चासोदरे संसृष्टिन्य संसृष्टिनि च सोदरे उभयोरप्रवृत्तौ न कोऽपि तद्धनं गृह्णीयादित्यापतेत्। अतः संसृष्टिनस्त्वित्यनेन संसृष्टिधने संसृष्टिनोऽधिकार उक्तो तदपवादोऽयं सोदरस्यत्विति। तथा च संसृष्टिनोऽप्य सोदरस्य सोदरे संसृष्टित्वरहितेऽपि सति नाधिकार इत्याह। तन्मीमांसानयतत्त्वालोचन निबन्धमभिधाने छित्त्वयोः क्वचिन्निरपेक्षयोः प्रवृत्तयोः शास्त्रयोः क्वचिदुभयविषयसमावेशवशादेकत्र प्रवृत्तिमात्रेण वैरूप्यम्भवति तथा सति केवलोल्लाद्य प्रतिस्थोत्रापच्छेदे निरपेक्षयोः सर्वस्य दायिस्वशास्त्रयोर्युगपदुभयापच्छेदे प्रवृत्त्यभावाद्विरोधाभावेन विकल्पेन बाध्यत इति विचारो निर्मूलः स्यादपच्छेदनये। तस्मात् क्वचिद्विधाना बाध निरपेक्ष विधानं क्वचित्तद्बाध सापेक्षं चेत्तदा वैरूप्यं यथोपालवयन्तीत्यत्र प्राक्प्ररूपितम्। अन्यथा चतुर्णां पौर्णमासीमभिवर्धयेत्यग्नीषोमाभावास्यामित्यनयो रुपांशु यागाग्नीषोमीय विषय ऐन्द्रदध्यैन्द्रपयो विषये चैकैकशः प्रवृत्तयोरुभयो साधारणयो र्विधि विषय समावेशोऽप्येकमपि न प्रवर्तेत। यद्यपि स्वयमुपवर्णितं संसृष्टिनस्त्वित्यस्यापवादः। सोदरस्यत्वित्यादिरिति। तदत्यसम्बद्धं।

विनिगमकाभावेन वैपरीत्यस्यापि सम्भवात्।

पौर्वापर्यमात्रस्याप्रयोजकत्वात्। तस्मात्सोदर्यवचनं संसृष्टिनस्त्वित्यस्यैव विवरणार्थमित्युक्तं तेन वचोभङ्ग्यान्तरेणैव तत्रोक्तम्। किञ्च सोदरे संसृष्टिनि संसृष्टासोदरापवादार्थं सोदर

वचनस्य वर्णितावस्थेतरा सोदरयोरुभयोरप्यसंसृष्टित्वे प्रत्यय-भावात् तुल्याधिकारो वा द्वयोरपि स्यात्। अथावापि सोदर वचनमेव प्रवर्त्तते तर्ह्येकत्र संसृष्टिवचनबाध सापेक्षमन्यत्र तु स्थिरपक्षमिति मत्यत तदैवविधि वैरूप्यम्। यथा सौमिकी-वेदिपारिदीक्षणीयादिष्वति देशप्राप्तदर्श पौर्णमासिकवेदि बाधेन विधीयेत तर्हि तत्रातिदेशबाध सापेक्षत्वविधिरन्यत्र तन्निरपेक्ष इति वैरूप्यादवेदिमद्विषयकत्वमेव तस्य व्यवस्था-पितं तन्त्रे। अस्मन्मते तु व्याख्यातरीत्या द्वयोर्भिन्नविषयत्वे-नानर्थक्य वैरूप्ययोर्न्न प्रसक्तिरिति कृतं विस्तरेण। स्मृति-चन्द्रिकाकारस्त्वाह येषां ज्येष्ठः कनिष्ठो वेत्यादि मनुवचने च शब्देन सोदर भ्रातृ भगिन्य सोदर संसृष्ट भ्रातृणामितरेतर-युक्तानां विभागकर्त्तृतायाः समेत्य सहित शब्दाभ्यामवगतेर्योगी-श्वरवचः संसृष्टि सोदर सद्भावे भिन्नोदरस्यानधिकारावगते-रस्ति तावदनयोर्विरोधे तद्विरोधपरिहारार्थं केचिदेवं मानवं व्याचक्षते। समस्तुतभागं सोदरा यदि संसृष्टास्तदात एव गृह्णीयुर्न संसृष्टिनः सोदरा अपि। संसृष्टसोदराभावे सर्वे सोदराः समेत्य मिलित्य सहिताः समप्रधानभावेन समन्यूनाधिकं विभजेरन् सोदराणामभावे सनाभयो भगिन्यस्तासामप्यभा-वेऽन्योदर्या इति। तदेतदनेकाध्याहार दोषादति क्लिष्टत्वा-च्चोपेक्षणीयम्। विज्ञानेश्वरेणापि मानव संवादायान्योदर्य्यस्तु संसृष्टि नान्यैदर्य्यो धनं हरेदिति पठेन योगीश्वरवचनस्य यस्तदध्याहाराद्याकाराङ्क्षिता क्लिष्टमतस्ताप्रतीयमानार्थकं स्वमत्यानिरूपितत्वान्न। तस्माद्यथा प्रतीयमानार्थकयोरेव मनु योगीश्वरवाक्ययोर्विषय व्यवस्थयै वा विरोधो वाच्यो नाति-

क्लिष्टैवार्थ्यतेति सैवोच्यते स्थावर जङ्गमात्मकोभयविध धनसद्भावे मनुवचनं संसृष्टासंसृष्टानां भ्रातॄणां भगिनीनाञ्च विभज्यग्रहणं बोधयति। योगीश्वरवचनन्तु केवलस्थावरसद्भावे केवल तदि तरद्रव्यसद्भावे वा तद्विषयम्।

अन्यद्वृत्तन्तु यद्द्रव्यं संसृष्टानान्तु तद्भवेत्।

भूमिं स्थावरसंसृष्टाः प्रस्तीर्युर्यथागत इति प्रजापतिस्मृतेः।

द्रव्यमिति गो बलिवर्द न्यायेन प्रकटस्य द्विपद चतुष्पदादि रूपस्य जङ्गम द्रव्यस्य ग्रहणम्। संसृष्टानां भिन्नोदराणामिति शेषः। योगीश्वरवचसि नान्योदर्योदिति पाठः। तस्मात् केवल स्थावर सद्भावे केवल जङ्गम सद्भावे च योगीश्वरवचनादसंसृष्टोऽपि सोदरस्तद्गृह्णीयान्न तु संसृष्टोऽपि भिन्नोदरः। उभयविध धनसद्भावे तु प्रजापतिवचनोक्ता व्यवस्थाया। संसृष्टाः सोदरा भ्रातृ भगिन्यः संसृष्टा भिन्नोदराश्च विभज्य गृह्णीयुः। मनुवचनस्याप्येतदर्थत्वैवेति। तदसत्। अध्याहार क्लिष्टतादि दोषस्य तत्राप्यन पायात्। प्रजापति वचनोक्ता व्यवस्थाया विज्ञानेश्वरीय व्याख्यानेऽप्यविरोधात्। अतएव मदनरत्नकृता तद्व्याख्यानमभ्युपेत्यैव प्रजापतिवचनमपि व्यवस्थापकतया पठितमन्यथा तु भवद्व्याख्याने योगीश्वरवचने पौनरुक्त्यं दुष्परिहरमापद्यते। अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेदित्यनेनोक्तस्यैवार्थस्य संसृष्टो नाम्य मातृज इत्यनेना न्यूनानतिरिक्तस्य प्रतिपादनात्। मानवसंवादिनो पुनरुक्तस्यार्थस्य क्लेशेनापि वक्तुं शक्यत्वे मूलभूत वाक्यान्तर कल्पना गौरवापादकस्यार्थान्तरस्य कल्पयितुमनुचितत्वाच्च। याज्ञवल्क्य स्मृतिटीकायां शूलपाणिः।

अन्योदर्यः संसृष्टीनान्योदर्यं धनं गृह्णीयात्।

असंसृष्ट्यपि सोदरएव गृह्णीयात्। न तु संसृष्टः सा पत्न भ्राता। नान्योदर्यो धनं हरेदिति पाठे अन्योदर्यः संसृष्ट्यपि धनं न गृह्णीयादिति व्याख्या। असंसृष्टि सोदराधिकारार्थमिदं वचनमतो न पुनरुक्ततेत्याह तन्नु श्रीकरमत समानयोग क्षेमम्। रत्नाकरस्त्वाह यत्तु कल्पतरौ नान्योदर्यं धनं हरेदिति पाठो दृश्यते समूलभूत याज्ञवल्क्य मिताक्षरा पारिजात हलायुध ग्रन्थेषु नान्योदर्यो धनं हरेदिति पाठदर्शनात्तदनुसारि व्याख्यानदर्शनाच्च लिपिप्रमाद एवेति। दायतत्वकारस्तु सोदरे संसृष्टिनिसंसृष्टिन्य सोदरे च कतरस्तावद्गृह्णीयात्। एवं सोदरा सोदरयोः संसृष्टिनोः सद्भावे कतर इत्यत्र प्रथम आह अन्योदर्यस्त्विति। अन्योदर्यः पुनः संसृष्टी स नगृह्णीयान्नान्योदर्यमात्रः। किन्तु संसृष्ट्यपि पूर्ववचनस्थ सोदरपदानुषङ्गात्सोदरो गृह्णीयात्। तेनैकत्र विषये पूर्ववचनोक्त सोदरत्व संसृष्टित्वयोरेकत्रः सम्बन्धेन तुल्यत्वाद्विभज्य ग्रहणा मेतदुभय सम्बन्धेसोदरस्या संसृष्टिनोतुल्य रूपत्वान्नेति द्वितीय आह संसृष्टीनान्यमातृज इति। सोदरे संसृष्टे सत्यन्यमातृजः संसृष्टोपिन गृह्णीयात्। अर्थात्तत्र संसृष्टी सोदर एव गृह्णीयात्। संसृष्टत्वाविशेषेऽपि सोदरत्वेन तस्यैव बलवत्त्वादित्याह तदपिमिताक्षरादि सम्वाद्येव व्याख्याना कौशलमधिकम्। यदा तु संसृष्टः पिता पितृव्यो वा नास्तितदाऽ संसृष्टभिन्नोदरो गृह्णीयात्। तदभावे त्वसंसृष्टः पिता। तदभावे तत् पत्नी। तथा च शङ्खः। स्वर्यातस्य ह्य पुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा

पत्नीति। स्वर्यातस्य सुतस्य संसृष्टस्य संसृष्ट्यभावे भिन्नो-
दरा संसृष्ट भ्रातृगामि द्रव्यमित्यर्थः। तेन संसृष्टधन
विषये यथा स्थितमेवेदं वा वचनमिति स्मृतिचन्द्रिकाम
दनरत्नकारावाहतुः। संसृष्ट भ्रातृ विषयमेवैतत्तेन पितृ
पत्न्योस्तदभाव इति न विरुद्धमिति मिताक्षराकारादयः।
स्मृति चन्द्रिकायां शङ्खवचने ज्येष्ठग्रहणं सुसंस्कृतत्वादि गुण-
वत्त्वकथनार्थं न तु मध्यमादिनिवृत्त्यर्थम्। पुनरपि तदभाव
इति वक्तव्ये वाशब्दः प्रयुक्त फलसाम्यात्। तथाहि। वा शब्दा-
द्विकल्पः प्रतीयते। न चात्र साम्यरूपे वस्तुनि तुल्यावगतेः
फलसाम्यमस्त्येव। एवं चायं क्रमः भ्रात्रभावे पिता। तद-
भावे माता तदभावे ज्येष्ठा पत्नीति मदनरत्ने तु मातापित्रो-
र्विपरीतक्रमः। मिताक्षरोक्तन्यायाद्विभक्त संसृष्टविषय विष्णु
वचन वदत्र न्यायबाधक वचनाभावादिति तदाशयः। अतएव
पत्नीदुहितर इति वचने विष्णु वचनानुरोधेन स्मृतिचन्द्रि-
कावत्पितरावित्यत्र प्राक् पिता तदभावे मातेत्येव तत्रोक्तम्।
प्रपञ्चित श्चैतद्विस्तरेणास्माभिः प्रागेव। ततश्च मदनरत्ने दुहि-
त्रादि क्रमविरोधाद विरोधाय तत् संसृष्टभाग विषयमिति
कल्प्यते विभक्तोक्तनैयायिक पत्नीदुहित्रादि क्रमोऽत्र वाचनिक
क्रमेण बाध्यते। अस्मिन् क्रमे कस्य चिन्न्यायस्याभावाद्वाचनिक
एवायं क्रमः। नारदोऽपि।

मृतेपत्यौ तु भार्यास्तु भ्रातृपितृ मातृकाः।
सर्वे सपिण्डास्तु धनं विभजेयुर्यथांशत इति॥

अस्यार्थः। भार्याः पत्न्यः। भ्रातृ पितृमातृका याः पत्यु-
र्भ्रातृ पितृमातरस्तद्भाव विशिष्टा इत्यर्थः। अत्र द्वन्द्व समासे

भ्रात्रपेक्षया अर्हितपित्रादिपद पूर्वनिपातं परित्यज्य वैपरीत्येन समासरचनां कुर्वता नारदेन संसृष्टापुत्र द्रव्यं प्रथमं भ्रातृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे वृहस्पत्यभिगामीति दर्शितम्। एवञ्च संसृष्टपत्नीनां मुख्यगौण पुत्त्राभावेन प्रथमन्दायहरत्वं किन्तु संसृष्टि सोदरभिन्नोदर भ्रातृ पितृमातृणामप्यभावे इति। द्रष्टव्यम्। सर्वे सपिण्डास्त्वित्यादेरयमर्थः। संसृष्टा पुत्रस्य ये भ्रातृ पितृ मातृ व्यतिरिक्ताः सपिण्डाभ्रातृ पुत्त्रादयस्ते स्वधनम्पूर्वम पुत्रधनेन सह स्वपित्रादिना संसृष्टन्तदूर्ध्वन्तत्पत्नीभिः सह यथांशतो भ्रातृ पुत्राणां भ्रातंशो भार्य्याणाम्भर्त्तंश इत्येवमंशानति क्रमेण विभजेयुरिति। पत्यभावे संसृष्टा पुत्रांशन्तद्भगिनी लभते। तथा च वृहस्पतिः।

या तस्य भगिनी सातु ततोंऽशंलब्धुमर्हति।
अनपत्यस्य धर्म्मोऽयमभार्य्या पितृकस्य च॥

अमातृकस्य चेति च शब्दार्थः। भगिन्यभावे केवलाः सपिण्डा अनन्तराः सपिण्डास्तद्दायं विभजेरन् यथांशतः। तदाद्यस्य तस्य धनम्भवेदिति मनूक्त प्रत्यासत्तिक्रमेण लभेरन्। प्रतिपदोक्तानाम भावात्। तथा च स एव।

ततोऽनपत्योऽभार्य्यश्चेद भ्रातृ पितृ मातृकः।
सर्वे सपिण्डास्तद्दायं विभजेरन् यथां शतः॥

तद्दायं संसृष्टिदायम्। ततोऽनपत्य इत्यादेः प्रतिपदोक्त संसृष्टधन ग्राहिरहितस्येत्यर्थः। सपिण्डाभावे तु विभक्तसतधन वदेव संसृष्टः स्वयार्जित द्रव्यमपि प्रागुक्तक्रमेण प्रत्यासत्तितारतम्येन समानोदकादिगामीति द्रष्टव्यम्। संसृष्टे द्र-

त्यमधिकृत सपिण्डेभ्य ऊर्ध्वं विशेषाभ्युतिरिति। ननु सत्यपि पत्न्यादौ वचनात्मृत संसृष्टिधनस्य संसृष्टि भ्रात्रादिग्राह्यत्ववत् संसृष्टासंसृष्ट पुत्त्रसद्भावेऽपि पितृधनस्याप्येतद्वचन बलात् संसृष्टि पुत्त्रमात्र ग्राह्यत्वमस्त्विति चेत्। न अपुत्त्रस्येति पूर्ववचनस्यस्यानुषङ्गाद पुत्त्र संसृष्टिमरणस्य धनग्रहणाकारणत्वात् संसृष्टिनश्च पुत्रे सापुत्त्रत्वाभावात्संसृष्टिनस्त्वित्यस्या प्रवृत्तेर्विभजेरन् सुताः पित्रोरिति वचनात्पित्रंशे पुत्त्रयोर्द्वयोरप्यपि समभागभागित्वम्। प्राक्तनः स्वांशः परं संसृष्ट पुत्त्रेण भुक्तावशिष्टः पृथगुद्धरणीयः। पितुर्व्यांशस्तदानीं विद्यमानोंऽशः ससंसृष्टा संसृष्टाभ्यां विभज्य ग्राह्यः। न च संसृष्टिनस्त्वित्यत्रा पुत्त्रपदानुषङ्गोऽस्त्विति वाच्यम्। सपुत्र संसृष्टि भ्रात्रादिधनेऽपि पुत्रादिवाधेन तदंशस्य भ्रात्रादि ग्राह्यतापत्तौ सकलदेशीयानादिव्यवहार विरोधाय। अन्यथा पुत्रवद पुत्त्रसाधारण्या पुत्रमात्रविषय पत्नीत्यादि वाक्यापादकत्वानुपपत्तेस्तद्बोधकतु शब्दविरोधापत्तेश्च। न च भ्रात्रादि संसृष्टिम एवायं विशेषणं व्यावर्त्तकत्वात्पुत्र संसृष्टिनस्तु न व्यावर्त्याभावात्। असम्भवाच्च सम्भवे व्यभिचारे च स्याद्विशेषणमर्थवदित्यभियुक्तोक्तेरिति वाच्यम्। पृथग्वाक्यद्वयाभावादेकत्र च वाक्ये क्वचिद्विशेषण पुरस्कारेण क्वचिच्च तद पुरस्कारेण विधिप्रवृत्तौ विशेषण घटिताघटित वाक्यार्थद्वयनिबन्धन विधिवैषम्यरूप वाक्यभेदापत्तेः। किञ्च पित्रादि द्रव्यस्याभ्ये पुत्त्रत्वादिकमेवा पतितत्वादि विशिष्टं प्रयोजकमस्तु संसृष्टत्वविशिष्टमपि गौरवात् तत्र सर्वेषां संसृष्टानाम संसृष्टानाञ्च तुल्यमिति सर्वेषामेव पुत्रादीनां विशेषेण तद्धन ग्रहण सूचितम्।

न च विभागेन पित्रादि द्रव्यार्हत्वापगमः।

सर्वेषु पुत्रेषु विभक्ता संसृष्टिष्वु पुत्रवद्भार्य्यादीनामेव तत्र धनाधिकारापत्तेः। प्रत्युतापस्तम्बेन हारीतेन च विभागोत्तरमपि पिता पुत्रयोः परस्परधनाधिकार प्रतिपादनाच्च। यथाहतुस्तौ। जीवन्नेव वा विभज्य वनमाश्रयेत्। वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत् यद्युपहृश्येत्। पुनस्तेभ्यो गृह्णीयात् क्षीणाश्च विभजेदिति। वृद्धाश्रमं पारिव्राज्यम्। उपहृश्येद्द्रव्याभावे न क्षीयेत्। विभक्तजे तु सति पूर्वविभक्तानां पुत्त्राणां प्राप्नोति पितृधनाधिकारो वृहस्पतिवचनेनापोद्यते। यथाह सः।

अनीशाः पूर्वजाः पितुर्भ्रातुर्भागे विभक्ततः।
पुत्रैः सह विभक्तेन पित्रा यत् स्वयमर्जितम्॥
विभक्तजस्य तत् सर्वमनीशाः पूर्वजाः स्मृताः।
यथा धने तथार्णेव दानाधान क्रयेषु च॥
परस्पर मनीशास्ते मुक्त्वा शौचोदक क्रियामिति।

संसृष्टी धनहारकेण तत्स्त्रियः परिपालनीयास्तत्कन्याश्च विवाहपर्य्यन्तं पोषणीया संस्कर्त्तव्याश्चेत्याहतुः शङ्खनारदौ। संसृष्टिनं प्रज्ञस्य भ्रातृणाम प्रजाः प्रेयात्कश्चित्प्रव्रजेत वा।

विभजेरन् धनन्तस्य शेषास्ते स्त्रीधनं विना।
भरणञ्चास्य कुर्वीरन् स्त्रीणामाजीवनक्षयात्॥
रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्दुरितरासु च।
या तस्य दुहिता तस्याः पित्र्योंऽशो भरणे मतः॥
आसंस्काराद्भरेद्भागं परतो बिभृयात्पतिरिति।

इतरासु भर्तृगृह्यामरणलीषु दुहितास्विति यावत् । दाय- स्यादिर्व्यभिविधावाङ् तेन विवाह कारणमपि लभ्यते ।

इति संसृष्ट विभागः ।

अथ स्त्रीधनविभागं वक्तुं तत्स्वरूपन्तावन्निरूप्यते तत्र मनुः । अध्यग्न्यध्यावहनिकन्दत्तञ्च प्रीतिकर्मणि ।

भ्रातृ मातृ पितृ प्राप्तं षड्विधं स्त्रीधनं स्मृतमिति ॥

षड्विधमितिन्यून संख्याव्यवच्छेदपरन्नाधिक्यनिरासाय ।

अतएव योगीश्वरेण ।

पितृ मातृ पति भ्रातृदत्तमध्यग्न्युपागतम् ।

आधिवेदनिकाद्यञ्च स्त्रीधनं परिकीर्त्तितम् । इत्याद्यशब्द उपात्तः । विष्णुनापिषडधिकानि स्त्रीधनान्युक्तानि स यथाह ।

पितृ मातृसुत भ्रातृदत्तमध्यग्न्युपागतम् ।

आधिवेदनिकं बन्धुदत्तं शुल्कमन्वाधेयमिति स्त्रीधन मिति । नारदः । अध्यग्न्यध्यावहनिकम्भर्तृदायस्तथैव च ।

भ्रातृ दत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतमिति ॥

षड्विधत्वं मानववद्व्याख्येयम् । स्त्रीधनशब्दश्चायं यौगिकः । स्त्रीस्वामिकन्धनमिति न तु पारिभाषिकः । योग- सम्भवे परिभाषाया अन्याय्यत्वात् । अतएव योगीश्वरेण रिक्थ क्रयादि साधारण स्वत्वोपाय संग्रहायाद्यपदं प्रयुक्तम् । ननु च क्वचित् स्त्रीधनत्वनिषेधोऽनुपपन्न एवं सति स्यात् । नहि स्त्रीस्वामिकत्वं तत्र निषेद्धुं शक्यते । बाधात् । यथाह कात्यायनः । तत्र सोपधि यद्दत्तं यच्च योग वशेन वा ।

पित्रा भ्रात्राथवापत्या न तत् स्त्रीधनमुच्यत इति ॥

उपधिश्छलवादावेवेदमस्य दत्तं त्वया धार्य्यमलङ्कारादि-

नाद्यदिति नियम स्तत्पूर्वकादत्तं सोपधि योगोपगतवनन्दायादानं कन्यायै दत्तमिदन्तत्तु कथं विभाज्यमिति। शिल्प प्राप्तं सख्यादिभ्यः प्रीत्याप्राप्तन्तदपि न स्त्रीधनमित्यप्याह। स एव।

प्राप्तं शिल्पैस्तु यत्किञ्चित्प्रीत्या चैव यदन्यतः।
भर्त्तुः स्वाम्यन्तदा तत्र शेषन्तु स्त्रीधनं स्मृतमिति॥

पारिभाषिकत्वे भ्रात्रादिदत्त्वेन प्राप्तं स्त्रीधनं प्रतिषिध्यते। तेनैतस्माद्भिन्नमेव पितादिदत्तं शिल्पादि प्राप्तभिन्नं वा स्त्रीधनमिति परिभाष्यत इति चेत्। उच्यते। नात्र स्त्रीधनत्वनिषेधः। किन्तु तत्कार्य्य त्रिभागादि निषेधः। अतएवोत्तर श्लोके तत्रभर्त्तुः स्वाम्यमित्युक्तम्। भर्त्तुस्तद्विनियोगे स्वातन्त्र्यन्न स्त्रिया इत्यर्थः। प्रथमश्लोकेतु स्त्रीस्वत्वनिषेधोऽपि सम्भवति उपधियोग पदयोरुपादानात्। तादृशदाने च स्वत्वाभावस्य प्रसिद्धत्वात्। योगाधमन विक्रीतयोगदान प्रतिग्रहम्। यत्र चाप्युपधिम्पश्येत्तत्सर्वं विनिवर्त्तयेदिति मनु वचनात् भार्या पुत्त्रश्च दासश्च त्रय एवाधनाः स्मृताः। यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनमित्यपि वचनन्माध्यविषये शिल्पादि प्राप्त परमेव। एकमूल कल्पनालाघवात्। अध्यग्न्यादि स्वरूपन्निरूपितं कात्यायनेन। विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्नि सन्निधौ।

तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम्॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात्।
अध्यावहनिकन्नाम स्त्रीधनन्तदुदाहृतम्।
प्रीत्यादत्तं तु यत्किञ्चिच्छ्वश्र्वा श्वशुरेण वा॥
पादवन्दनिकाच्चैव प्रीतिदत्तन्तदुच्यते।
विवाहात्परतो यत्तु लब्धं भर्त्तृकुलात् स्त्रिया॥

अन्वाधेयन्तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ।
गृहोपस्कार वाह्यानां दोह्याभरण कर्मणाम् ॥
मूल्यं लब्धन्तु यत्किञ्चिच्छुल्कं परिकीर्त्तितम् ।
ऊढया कन्यया वापि पत्युः पितृगृहेऽपि वा ॥
भ्रातुः सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ।

भर्त्तुः सकाशादिति कल्पतरौ द्वौ पाठः । अध्यग्न्यादि शब्दास्तु योगरूढास्तादृश स्त्रीधनादावप्रयोगात् । गृहोपस्करणादीनाञ्चमूल्यं कन्यार्पणोपाधित्वेन वरादिभ्यः कन्याभरणरूपेण गृह्यते तच्छुल्कमिति मदनरत्ने व्याख्यातम् । मिताक्षरायान्तु यद्गृहीत्वा कन्या दीयते तच्छुल्कमित्युक्तम् । उभयत्रापि पित्रादीनां कन्याया इदमित्युद्देशो विवक्षितः । अन्यथा तत्स्वत्वाभावेन स्त्रीधनत्व व्यपदेशत्वानुपपत्तेः जीमूतवाहनेन तु कर्मिणामिति पठित्वा गृहादिकर्मिभिः शिल्पिभिस्तत्कर्मकरणे भर्त्रादि प्रेरणार्थं स्त्रियै यदुत्कोचदानं तच्छुल्कं तदेव मूल्यमसत्यर्थत्वादिति व्याख्यातम् । पुनश्चोक्तम् ।
यदा नेतुम्भर्त्तृगृहे शुल्कन्तत्परिकीर्त्तितमिति व्यासोक्तं वा ।
भर्त्तृगृहगमनार्थमुत्कोचादि यद्दत्तं तच्छुल्कमित्यर्थ इति ।
तदुभयमपि स्त्री स्वामिकं भवत्येव तस्या एव दत्तत्वादिति तत्र स्त्रीधनत्व व्यपदेशोऽन्य स्त्रीधनवत् सुगमएव । आधिवेदनिकं त्वन्तर विवाहकाले पूर्व्वभार्य्यायै यद्दीयते । यदाह याज्ञवल्क्यः । अधिविन्न स्त्रियै दद्यादाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यासान्दत्तेत्वर्द्धं प्रकल्पयेदिति ॥

पित्रादिभिर्व्विवाहार्थं स्त्रीभ्यो धनदाने विशेषमाह कात्यायनः । पितृ मातृपति भ्रातृ ज्ञातिभिः स्त्रीधनं स्त्रियै ।

यथा शक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते ॥

स्थावरेतरधनं यथाशक्ति कार्षापणसहस्रद्वयपर्य्यन्तं देयमित्यर्थः। व्यासोऽपि।

द्विसहस्रः परो दायः स्त्रियै देयो धनस्य तु।

आद्विसहस्रादिति कात्यायनेन पर इति च व्यासेनोक्तेरितोऽधिकमिति धनिनापि न स्त्रीभ्यो देयमिति दर्शितम्। अयञ्च नियमः प्रतिवत्सरमसकृद्दर्पणे ज्ञेयस्तेनानेक वत्सरेषु जीवनार्थं दीयमानमितोऽधिकमपि भवति चेन्न दोषः। जीवनार्थत्वाद्दानस्य यावज्जीवञ्च द्विसाहस्रमात्रेण तन्निर्वाहा सम्भवात्। स्त्रीधनेऽपि भर्त्रानुमतिमन्तरेण स्त्रीणान्न स्वातन्त्र्यमित्याह मनुः।

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यकात्।
स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञयेति ॥

निर्हारो व्ययः। क्वचित्तु स्त्रीधने तासां स्वातन्त्र्यमस्ति। यदाह सौदायिक स्वरूपमुक्ता कात्यायनः।

सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते।
यस्मात्तदा नृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम्।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

भर्त्तृदत्ते तु स्थावरेतर एव स्वातन्त्र्यमित्याह नारदः।

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन् मृतेऽपि तत्।
सा यथा काममश्नीयाद्दद्याद्वा स्थावरादृते ॥

स्थावरे भर्त्तृदत्ते स्त्रिया निदासाद्युपभोगमात्रं न दान विक्रयादिकमित्यर्थः। अपुत्रा शयनं भर्त्तुरित्यादि कात्यायन-

वचोऽपि भर्तृदत्तस्थावरविषयमेव नारदैकवाक्यतयेति केचित्। अस्माभिस्तु पत्नी दुहितर इति व्याख्यानावसरेऽस्य विषयं प्रपञ्चितम्। पुरुषाणामपि कस्मिन्नपि स्त्रीधने न स्वातन्त्र्यं स्वाम्याभावादित्याह कात्यायनः।

न भर्त्ता नैव च सुतो न पिता भ्रातरो न च।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥
यदि त्वेकतरोऽप्येषां स्त्रीधनं भक्षयेद् बलात्।
स वृद्धिकं स दाप्यः स्याद्दण्डश्चैव समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत् प्रीतिपूर्व्वकम्।
मूलमेव तदा दाप्यो यदा स धनवान् भवेत्॥
अथ चेत्स द्विभार्य्यः स्यान्न च तां भजते पुनः।
प्रीत्या विसृष्टमपि चेत् प्रतिदाप्यः स तद् बलात्॥
ग्रासाच्छादनवासानामुच्छेदो यत्र योषितः।
तत्र स्वमाददीत स्त्री विभागं रिक्थिनां तथा॥

स्त्रिया धनं गृहीत्वा यद्यपरभार्य्यया सह वसत्येनाञ्चावमानीते तदा गृहीतं तद्धनं राज्ञा बलाद्दाप्यः। भक्ताच्छादननिवासान् यदि भर्त्ता न ददाति तदा तेऽपि स्त्रिया बलाद् ग्राह्यास्तत्स्त्रीमं धनं वा ग्राह्यमिति श्लोकद्वयस्याथ चेदित्यस्यार्थः। इदमपि तस्या दोषराहित्ये बोध्यं दुष्टा पुनः किमपि स्त्रीधनं न लभत इत्याह स एव।

अपकारक्रियायुक्ता निर्लज्जा चार्थनाशिका।
व्यभिचाररता या च स्त्रीधनं न तु सार्हति॥

नार्हतीत्यनेन तया लब्धमप्याच्छिद्य ग्राह्यमिति सूचितम्। अपकारं क्रिया युक्ता सदा भर्तृप्रतिकूलाचरणपरा।

